राज्ञ राक्षसमारण सूचयाञ्चक्रु। केचन दलमायोज्य वासासि लिप्त्वा "अस्माभि स देव! प्रसह्य हत"—इत्यपि प्रोचुः परस्पर व्यवादिषु। महाराजमुखगगने नवीन ज्योतिरुदगात्। मानससमुद्रस्योपहारतरङ्गा कराभ्यां निर्जग्मु। ग्रामाणामधिकारपत्राणि लिखितानि। सर्वेषां मुष्ट्यो भारैर्भृता।

अह विचार्यावोच "देव! किमर्थ निर्धनीक्रियते कोश। अत्रत्या एवैते न कदापि व्यापादि राक्षसोऽप्यस्यैरेव। अद्य किमेषु दैव बलमुपेतम्! देव! यदि राक्षसो मृतस्तर्हि अनन्यसाधारणो हन्ता तत्पृच्छ्यतु कस्यावसर कोऽगमत्"—इति।

तत्र च व्यतिकरे भवद्गमन भवच्छयनञ्च विदितम्। अत पर यज्जात तज्ज्ञायत एव श्रीमद्भि।

कल्याण—आम्।

मन्त्री०—कस्य वशस्य विभूषण देव।

कल्याण—राजन्यकुलप्रभवोऽहम्।

ससरणे सद्यासोभूषणैर्नरैर्नारीभिश्च कसुमस्रग्भिर्मधुरादरवाग्भिश्चाद्रियमाण कल्याणो राज्ञा राजभवनमानीत।

केवलमेतन्नगरनिवासिन एव न हि प्रान्तीया अपि समूहिता। मानवमहोदधेस्तरङ्गास्तरङ्गिता आसन्। सर्वो जन प्रान्तप्राणप्रदातुर्दर्शनाय आकुल आसीत्। कल्याणो महाराजेन सह राजभवनस्य गवाक्षे स्थितो जनसमूह नन्दयामास। चिनयता विद्युत्प्रदीपा लोकचक्षूंषि चमत्कुर्वन्। महाराजश्च लोक सम्बोध्य[1] ध्वनिविस्तारकसाहाय्येन प्रावोचत्—

प्रिया प्रजा! अद्यतन दिनमस्मज्जीवनस्य प्रदीप्ततम दिन वर्त्तते। केन शब्देन कया रीत्या केन कर्मणाऽस्य महाप्रभावस्य यून आभार प्रदर्शयामो मनो न निश्चिनोति। अस्मत्सविधे नैतादृक् किमपि यत् प्रत्यर्प्य वयमानृण्यमासादयाम।

शास्त्रकारै राजनाद् राजा नृन् पातीति नृप—इत्येवं तेजोऽतिशायित्वात् पालनाच्च सामान्यो मानव एतद्गुणवैशिष्ट्येन राजाभिहित। एतद् गुणद्वयमस्मिन् यूनि वर्त्तते। अतोऽय राजा भवितुमर्हति। भगवता राज्ञ पद योग्यतानिष्टमेव

१ लाउड स्पीकर।

रचितम्। अस्माभिर्दौरात्म्येन तत्कुलपरम्परया स्वीकृतम्। अद्यैन युवान वीक्ष्य अनुतप्तो लज्जितश्चास्मि, अत इत प्रभृति अयमेव प्रजाना शासक । लोकस्य न्यास योग्येऽधिकारिणि समर्प्य भाररहितोऽह नितरा प्रसीदामि। नवीननरपालस्य शासने सर्वे-विधमानन्दमनुभवन्तो भवन्त प्रेय श्रेयश्चाप्नुवन्तु—इत्यस्तु मे शुभाशीर्वाद इति।

महाराज स्वय स्वमुकुट तस्य शिरसि पर्यधापयत् करवाल करयोरादायार्पयत्, चामरश्चादाय सर्वत प्रथम व्याजयत्।

महाशय, अधुनाय नितरा वृद्ध केवल नाममात्रेण राजा। केन्द्रादेशानुसारिकार्य-निर्वहणे विवश कि करोतु वराक इति।

अथाह प्रधानमन्त्रिण सम्भाव्य ब्राह्मणबटुनाऽऽत्मपितुकामस्तरयावास गत्वा यमदूतो-पमैश्चतुर्भी राजपुरुषै कृतेक्षण शृङ्खलाबद्धपद सहयोगिभिर्भविष्यत्कार्यक्रमायाऽऽलपन्त मनितरसाधारणवैदुष्यमनालस्य कर्म कर्तमाग्रे ऽयन्त विप्रयुवान वीक्ष्य तद्भावमुपधस्तस्योद्देश्य विभाव्य तस्य जीवन परमावश्यक मन्वान उदघोषयम् —

"मान्या, शासनस्यान्याय्य परा काष्ठा स्पृशति। परोऽपराध्यति दण्ड्यते चापर। अस्मदीया एव भ्रान्त्याऽस्मान् हन्तुमग्रेसरा। क्रूर एव गलमर्पजिहीर्षेच्चेत्कथ जीवनम्। अस्माक भ्रातर एवास्मान् हन्तुस्त दा कथ जीविष्याम। अस्माभि प्रतिज्ञातव्य वय सघटिता शासनमनुदूलयिष्याम। एतदर्थमेका विचारपरिषत् स्वतन्त्रोपवने परेद्यवि पञ्चनदनसमये भविष्यति सर्वै समेतव्यम्। एतदाह्वानश्च सर्वेभ्य श्रावयितव्य येनाधिका जना समागच्छेयुरिति।"

इत्थानुपगम्यावोचं "शोक त्यजतम्, अह भवत्पुत्रमन्यांश्च कारावासिन उन्मोचयिष्यामि नो चेत्स्वीकृतापराधो भवत्पुत्रस्थाने शूलमारोक्ष्यामि। अह कथयिष्यामि यन्मम प्रबन्धो मदाज्ञया मयि रोगग्रस्तेऽनेन पठित। पाठको निर्दोष। भवत्पुत्रस्य रक्षण देशस्य कृते परमावश्यकम्। धन्यौ भवन्तौ यौ स्वार्थ परित्यज्य देशस्य निर्माणाय स्वातन्त्र्याय च प्राणार्पक सुत प्राप्नुवाताम्। भवादृशामाश्रयेणैव स्थिता भू"।

त्रयोदशपलन्यूने पञ्चनदनसमये स्वतन्त्रोपवने मनुष्या क्रियधाजग्मु। धरणी मानवान् प्रसवन्तीव प्रतीयते स्म। पञ्चनदनघण्टाघोषेण सममहमुत्थाय सभापतित्वदाय जनश्रद्धेय प्रस्तुत पार्श्वमञ्चे स्थापिताया भारतमातु प्रतिमाया गले पुष्पहार समर्प्यावोचम्।

समवेतसहयोगिन ! सुहृद !

सर्वत प्रथम स्व सर्वथा निरीक्ष्यास्माभि प्रतिज्ञातव्यम्, यदह स्वेच्छया स्व भारताय तस्य सेवायै स्वतन्त्रतायै उन्नत्यै च समर्पये। एतदर्थं कशाघाते वृश्चिका तोद काराबासो मशकादन परिजनैर्वियोग क्षुधा द्रव्यदण्डो मृत्युश्च मन्निर्णय प्रतीपयितु न शक्ता। स्वार्थं परित्यज्य देशहिताय वर्णवर्गधर्मनिरपेक्ष कार्यं करिष्यामीति।

यूय सर्वे भारतस्याधिपतय, स्वतन्त्रे भारते सर्वस्य समानमुत्तरदायित्वम्, इदमनुपयुक्त भविष्यति यदहमाज्ञापयामि, परमह भवद्भिर्नियोजितोऽनुशिष्ट सहयोगीव निवेदयामि।

अस्माभिर्यथाशक्ति सघटय देशस्योत्थाने यतितव्यम्। वृद्धैरेतद् विचारणीय यत् स्वाधीन भारत द्रष्टु क स्थास्यति—एष विचार कर्मणि शैथिल्यमौदासीन्यञ्चापादयति। सर्वेषामस्माक कर्तव्य यद् वयमस्मज्जीवनसर्वस्व स्वतन्त्रभारतस्याधारशिलाया अधस्तात् स्थापयिष्यामो यत्र कोऽपि नेक्षेत। अद्यतना भोगा अस्मद्बान्धवरक्तसिक्ता ज्ञातव्या। अवधार्यताम्, परतन्त्रतायां घृतादनात् स्वतन्त्रताया घासादन गरीय.। मरुमणि प्रतापो घासमेव जघास।

विश्वसन्तु, एष दासो विजये पराजये तेजसि तमसि सुखे दु खे सहैव भविष्यति। अह किं दातु शक्नोमि, ऋते क्षुधा तृषा श्रम खेद क्लेश मृत्यु वा। एतज्जीवन भारतमातुश्चरणयोरर्पये।

सुहृदो मातरो भगिन्यश्च,

सघर्षं चालयितु धनस्यावश्यकता वर्तते। निर्धनो ह्यसमर्थ स्थातुमद्यतने समये। एतदर्थयुगम्। अर्थस्याद्य महती प्रतिष्ठा। धनस्य प्रतिष्ठोन्मूलनमस्माक ध्येयम्। पर नाद्य तस्य समय। अत कण्टकेन कण्टकमिवानेन परतन्त्रतोन्मूलनीया। अस्माक कार्यं न सरलम्। सङ्घर्षो दीर्घकाल कठोरश्च सम्भाव्यते। शासकस्य हृदय नवनीताभ न भवति अपि तु वज्राभम्। यत्र स्त्रीणा चीत्कारा शिशूनामार्त्तनादा वृद्धाना श्वेतकेशा अश्रुद्रुम कर्तु न शक्ता। अत सर्वसाधनाना समुद्योऽस्माभि कार्यं। अस्माक भ्रातरो भगिन्यश्च करकवाला भुशुण्डिकामादाय सर्वविधा परिस्थिती प्रतिरोद्ध समर्था भवेयु, यद्यपि नास्माक शस्त्रेषु विश्वास। पर क्षमाऽपि शत्रौ सत्यामेव वरीयसी। भारतस्य परिश्रमप्रियाभि प्रजाभिरेतदम् शसितव्य यत् परेषा

यन छलेन व्यसनेन लुण्ठन्तो धनिनः, साम्राज्यवादिनः शासनस्य लुण्ठने साहाय्यमाचरन्तोऽस्मत्साहाय्यं करिष्यन्ति। यद्येभिः स्वार्थं साधयितुं सतृष्णः साम्राज्यलोलुपः सह सम्मिल्य विदेशयात्रादाता कृषकोऽन्नाय परमुखापेक्षी, विश्वव्यापाराय तन्तून् वयन् तन्तुवायश्च तरुण्याः पुत्र्याः लज्जाय वासांसि याचमानो विहितः। कार्मणविधकर्मानुरूप प्रासाद निर्मायापि शूकरवास वसन् भर्तुं बाधितः, स एव समाजस्य कलङ्कः स्वार्थी जलौका इव शासनस्य घटकः स्वस्य साधारणमनोरञ्जनाय लक्षशो रूप्यकाणि प्रवाहयति। एषोऽन्यायो बहुदिनं यावत् न स्थास्यति। आधुनिको धनी ज्वालामुख्यां क्रीडति चेदद्यापि सोऽनवहितो निश्चित पतिष्यति। किं सम्भाव्यते सोऽस्माभिः सहायिष्यते? सोऽस्माकं शवे हसिष्यति, स्वाधीनसंग्रामाग्नौ दत्तप्राणाहुतीरवहेलयिष्यति, क्लीबोऽपि स विषयरतः प्रेमदृग्भ्यां भ्रंशयितुमेषिष्यति। स्वाधिनो देश्या वा सुविदेश्या वा स्वार्थं लुण्ठतां रक्तं शोषयतां धनिनां वा नान्तरम्।

सगृहीतधनस्य कणाः स्वतन्त्रतामन्दिरस्य पथि विकरिष्यन्ते, भारतमातुश्चरणयोरर्पयिष्यन्ते इति।

समास्थले, विशेषतो विधवाः स्त्रिय आसन्निरलङ्करणा नराश्च, तथाप्याभूषणानां वृष्टिस्तत्राभूत्। क्षणेनैव भारतमातुरग्रभूः कर्णनासागलाभरणैरङ्गुलीयकैश्च व्याप्ता। परमनेन स्त्रीणां तृप्तिर्न जाता, ताभिर्न ज्ञातमासीद् यदद्य धनसंग्रहो भविष्यति, ता अपरदिने सभायै आजग्मुः। तासामाग्रहेण द्वितीयस्मिन् दिने तस्मिन्नेव समये स्थाने च सभाऽऽहूता।

नगरस्य सर्वाः स्त्रियोऽद्य आतुरिता इव कौशेयखण्डेषु चकचकायमानान्याभूषणान्याबध्य समयात्पूर्वमेवोपेताः। तासां मुखेष्वद्यैका विलक्षणा तेजोमयी च्छाया व्याप्ता। आभूषणानां स्वर्णानां बहुमूल्यानां राजतानां सौवर्णानां भाजनानाञ्च कूटं भारतमातुश्चरणयोर्जातम्। यौवने षोडशद्वादश वसन्तान् प्रक्षिपन्त्यो बालिकाः पुलकिताः प्रफुल्लारविन्दमुख्यो नव्यो हिमकेभ्यः स्वार्थं वासमनुभूयेव इव दृष्टाः स्वतन्त्रभारतवेदिकायां जीवनसर्वस्वं निश्चलं न्यचैषुः।

एका निरवलम्बं रुदतीं युवतिं समालम्ब्य मुग्धमुन्मादिता अपराः स्त्रियः समाजग्मुः। ता यथाकथञ्चिदस्फुटया गलेन रुद्धेन भग्नया स्वरेण प्राबोधयन् यदस्याः सत्व-

सुशीलो युवा भर्त्ता राजद्रोहापराधे बद्धोऽय प्रलम्बयिरोस्ति इति। "हन्त, हन्त," इति कोलाहल सर्वतो गगन व्यनादयत्। अश्रुपूर्णारक्तलोचना रमणी च स्वसौभाग्यसिन्दूरेण सह रत्नखचित चयत् शिरोरत्नमञ्चलो हृत्वा भारतमातुश्चरणयोरार्पयत्।

सत्यम्, ईदृशदेव्याश्चरणेषु प्रहीतु देवास्तपोरता मुनयश्च लालायिता।

एका वृद्धा स्खलन्ती एकेन हस्तेन वक्षसाश्लिष्ट चित्र परेण च दण्ड दधती समता। हिमश्वेता सा रुदत्यवोचत् "एतन्ममैकमात्रस्य पुत्रस्य चित्रमस्ति। अस्य पिता महापण्डितो विद्याव्यसनो मनस्वी निर्धनो युवावस्थायामेव देहमजहात्। तस्यान्तिमेच्छाऽऽसीद् यत्तस्य पुत्रो महान् विद्वान् भवेत्। भिक्षा पत्या निषिद्धाऽऽसीत् तद्वृत्या च पुत्रमानसे निम्ना दयनीया भावना न भवेद्यतोऽह वनात् शुष्कं काष्ठ समानीय विक्रीणन्ती सुत पाठयन्ती जीवन्त्यासम्। एकदा मम षड्वर्षीयो निर्भीकं भाषमाणो माणवक शासनेनावद्ध। एको गौराङ्ग आयुक्तः सह दशभिरन्यै राजपुरुषैर्मम शिशुमाहूयावदत्–"वन्दे मातरम्" न वक्तव्यम्। पर विकटसाहसोऽदम्योत्साह स तस्याग्रे एव तारस्वरेण "वन्दे मातरम्" इत्यवदत्।

पाशवप्रकृतिरधिकारी करायाऽऽहन्तुमादिदेश। विद्यालयस्य प्राङ्गण एव सड सडेति शब्दायमाना कशास्तस्य कमलकोमले कलेवरे निपेतु। एतदन्तर माध्याह्निक भोजनमादायाहमप्युपेता। स वन्दे मातरमिति कथयन् भूमौ पतित। तेन कदापि ताडन नानुभूतमासीत्। तस्य त्वचो निर्झरवद् रक्त च्यवते स्म। शनैश्शनै 'वन्दे मातरम्' वदन् स जीवनाञ्जलि भारतमातुश्चरणयोरार्पयत्। गौराङ्गस्य शिक्षित श्वा शिशोरुष्ण सद्योरक्त लिहन् स्वामिन प्रियता बभार। अह च जडीभूता पश्यन्ती सङ्क्षोभनष्टविवेका रुद्धगला उन्मत्तेव विस्फारितनेत्रा शिशोश्शरीरे निपत्य मूर्च्छिता। दिनत्रयानन्तर ममोटने मम मूर्च्छा भग्ना। गौरी सारमेयोत्पटित त्वच घृतमधुमधुयष्टिभिरुपनह्यन्ती आसीत्। समस्त शरीर सवाणि वस्त्राणि रक्तदिग्धान्यासन्, यानि दृष्ट्वाह पुनर्मूर्च्छिता।

तस्य विवाहाय मया सुवर्ण क्रीतमासीत्, यदेव एना गतिं प्रापितस्तदा मया सुवर्णस्य शिरोधिश्रियैषा शाखा निर्मापिता। अद्यतनोऽवसर पुरा न प्राप्त, एतत्कर्मण्यर्पणा मम शिशोरात्मा शान्तिमधिगमिष्यति—इति कथयन्ती वृद्धा चित्र भूमौ

प्राक्षिपत्। इद्घाविवरणेन सर्वो जनः स्फुटं रोदितुमारेभे। अश्रुस्रोतः नेत्रद्वारेऽस्मात् नासिकानाल्या बहिरुवाह, धैर्यस्य बन्धः क्षणशो भग्नः। कायो भग्नः। चित्रान् मनस्विता वर्षति स्म। मुग्धस्मितं तस्योष्ठयोः कपोले च प्रसृतमासीत्। इदया चित्र सौवर्णी शाखा च मातुश्चरणयोरारात् स्थापिते।

अहमुत्थायावोचम्, वयमवश्यं सफला भविष्यामो यत्रेदृश्यः शरणागतदीनार्त्तपरित्राण-परायणा देव्यो निवसन्ति, तद् भारत कथं विपद्येत्? याभिः पतयः पुत्रा भ्रातरः पितरः परिजनाश्च स्वाधीनतावेदिकायामारोपिता आहुताश्च, तासां भारत कथमवसीदेत्? सभास्थले यावन्नेको युवको मह्यं पत्रमदात्। अहश्चोद्घाट्य जनतामश्रावयम्:—

मत्पूरस्य प्रथमे किरणोद्गमेऽस्माकं भाग्यनिर्णयो भविष्यति। अस्मदवसानमनु हृदनस्पन्दनं समीपात् समीपतरमेति। अस्माकं जीवनप्रदीपः प्रातर्युमणौ विलेष्यते, उपाधिनाशे घटाकाशो महाकाश इव। परमस्मदीया विचारा विश्वस्मिन् विद्युल्लेखाव-च्चमत्कुर्वन्तो जागरणं सम्पादयिष्यन्ति। अस्माकं त्रुटिमेव भस्म यदि विनश्येत्, तेन किम्। शासनस्यात्याचारान् वहिस्समाजाय श्रावयितुमभियोगोऽयस्य योग्यः। तेन जगतो जागरणसम्भावना। यत्र शासुरोध निवर्तयितुमुद्युक्ता यदेव सद्धर्मन्याय-चर्व्णीयो यावत् मुष्टिमेयाना शक्तिशालिना श्रमिषु भारतीयेषु शाङ्कटिकशायनेषु च सार्थं साधयितुमधिकारस्तिष्ठेत्। श्लाघ्यानां वीराणां वर्धनेन भवता सपर्या यस्मात् भविष्यति। वैमानस्तुरनं साहसमुच्चैरादर्शो निर्भयतापूर्णो भावश्च विश्वं चमत्करिष्यति।

अन्ते, ज्ञानेऽज्ञाने वा भूतानां घृष्टानां कृते क्षमामभ्यर्थयमानः पत्रमदः समापयामि—

वन्दे मातरम्। "अनेकेष्वेकः"

* * *

यत्र राजधानीं गताः। शुल्कशालायामेवैको घटकः[1] क्वचनापि विदितोद्देश्योऽस्मानु दयानदर्शयत्। तस्य प्रेरणया चेकः कायस्थो वाकीलो घटच्चक्रटितमहाप्रभावोऽ लब्धावकाशः सर्वेषां स्वतन्त्रतासंग्रामाभिमुखानामुन्मोचनाय पञ्चदशसुद्राभिः स्थिरीकृतः। सोऽस्मान् बहुविधं पृष्ट्वा सर्वाणि पत्राण्यस्माकं विचार्य विभाव्य यान्यद् यत् न्यायाधीशस्योपस्थाता[2] मुसल्मिः मलीननामा विद्यते, तेन मेलनमावश्यकम्।

---

1 दलाल। 2 यः पत्राणि न्यायाधीशायोपस्थापयति ( सिरस्तेदार, पेशकार )

समागमो यद्यपि सिद्धान्तविरुद्ध आसीत्, परमद्यतनजनपरिज्ञानाय, राष्ट्राय कारावासे म्रियमाणेभ्यो लोकभावनामधिकारिभावनाञ्च ज्ञातुं समागममपरिहार्य्यं मत्वा विहितसमयास्तस्यावासं गताः।

ग्रामसीम्नि कस्यापि समानशीलस्य धनिनो विशालं भवनं तेन स्वायत्तीकृतमासीत्। तस्य विशाले सभास्थले कुसुमकुड्मलाकारेषु पुण्डरीकसितेषु सहस्रशः काचभाण्डेषु उत्प्रभाः प्रदीपाः प्रद्योतन्ते स्म। अभित उपविष्टाभिरुपदर्शयामाभिरप्सरोभिरधिष्ठिता मिन्द्रपुरीमनुकुर्वति सभास्थले नगरस्यार्जितधना धनिनः कृषकोपार्जितराय सामन्ता उत्कोचिनो राज्याधिकारिणश्च कौशेयासनेषु वृहदुपबर्हपृष्ठा मद्यं पिबन्तस्ताम्बूलं चर्वयन्तः पतद्ग्रहे निष्ठीवन्तो धूममाकर्षन्त आसन्। मध्ये च विलासलीनः सलीमः।

* * *

गृहीतमुद्रेण द्वारपालेन बहिरेवासूचि यदुपस्थाता महोदयो गानसमाप्तिसमकालमेवान्तःपुरं प्रवेक्ष्यति, आलापेच्छा चेत् प्रतीक्षितव्यमेव। वयं कोणे कथञ्चिदपि प्राप्तस्थाना हृदये शोकशल्येन विद्धा अपि गानमञ्चे उपविष्टाः।

अथैकाऽऽनखशिखान्तं रत्नखचिता नर्तकी निःसरदनन्तचन्द्रा पौर्णमासी निशेव भास्वरा अनन्तचक्रवृत्तासमायुक्तं पारावताम्बरं शिरसा वहन्ती स्यूतरत्ननवनीतकौशेयचण्डातका विद्युल्लेखेव मञ्चमुपेता। सा जानुभ्यामवनिं गत्वा वृहत् कमलकुड्मलं हस्तस्पर्शेण विकास्य अञ्जलावादाय स्मितेन सितयन्ती सभास्थलं जनसाधुवादेन सार्द्धमुपस्थातुः श्रवणयोरापयत्। पार्श्ववर्त्तिनो ज्ञातं यदुपस्थाता महान् कलाकारोऽस्या गुरुश्चेति गुरुवन्दना।

अथ सा प्रतिसर्द्धिभिरनेकैर्वैणविकैर्मार्दङ्गिकैरनुस्वरं प्रक्वणद्भिरनुगता हस्तौ भ्रमयन्ती विरचितपदन्यासा दन्धे शिरसि मध्ये च हस्तं न्यस्यन्ती अङ्गुष्ठतर्जन्यौ परस्परं योजयन्ती मण्डलितचक्रचण्डातका अलक्तकविचित्रितहस्ततला विद्युदिव चञ्चच्चाञ्चल्या झङ्कृतनूपुरा कदाचन चूर्णकुन्तलान् स्पृशन्ती कदाचन झणझणायमाना रसना प्रक्वणयन्ती कदाचन मुद्रया हस्तौ संयोज्य विभजन्ती उत्तरीयं हस्तयोरादाय वातवेगेन रतिध्वजमिव प्रसारयन्ती पादतलेनापि तालं रचयन्ती चक्षुर्मुद्रया विश्वं विमोहयन्ती पद्मविलासविभासिसौन्दर्या मुद्राभिरेव गानस्यार्थमुद्बोधयन्ती सप्रभमुखी ओष्ठमुद्रया

मनोज्ञभाव मानवमानसे उच्छिदन्ती ग्रीवा मध्यञ्च वलयन्ती कमलकुड्मलायितानुरोजौ कम्पयन्ती कज्जलाक्षी प्रलम्बकृष्णकुन्तला दीपशिखातिलका साङ्गविक्षेप नृत्यन्ती गातुमारभत ।—

मम मनो व्याकुलम्
रात्रिन्दिवमलि ! मिलनं चिन्तत् । ( स्थायी )
शीत. सान्द्रो वायुर्वाति
विद्युत् पत्या सह चाभाति
प्रोषितपतिका मुग्धा तरुणी
घनघोरघटा पश्यन्ती
भृशमेतद् ! उद्विजते ।
मम मनो व्याकुलम् (१)

उद्दीप्याशादीपं दृष्टा
अङ्गनमध्यमहो उपविष्टा
सज्जा भूपानेपार्थं रलि !
द्रष्टुं श्याममुखं भृशमुत्का
सुविलम्बो मा तुदते ।
मम मनो व्याकुलम् (२)

तिर्यग्वीक्षणमधुरालापन-
हस्तस्पर्शैः प्रेमोत्पाद्य
चक्षुर्मलं निद्रा हृत्वा
वशय न तारा. गणितुम्
प्रियतम ! स्वरमेहि ।
मम मनो व्याकुलम् (३)

उभयतो हस्ताभ्यां नवनीतचण्डातकमुत्थाप्य छनच्छननच्छनन्नूपुरा भ्रकुटिकोट्या कामकोटिं वशमन्ती विद्युल्लेखेव क्षणस्थिरा आपततो भ्रमरकान् कोमलप्रलम्बाभिरङ्गुलिभिर्मध्ये मध्येऽपसारयन्ती अङ्गुल्यङ्गुष्ठसाहाय्येन शिरसि मकुटमुद्रां रचयन्ती अपाङ्गे कर्णमूले नेत्रयोश्च हस्तं विन्यस्य विविधभावं प्रकाशयन्ती मध्ये मध्ये स्कन्धा उन्नमयन्ती मोहिनीव रराज ।

मध्ये भावोद्बोधनाय द्रुतविलम्बिता गतिमाश्रित्य आरात्तिकमुद्रां वा प्रकल्प्यागाद्यदा भित्तिरिष्टकाश्चापि धन्यवादान् व्यतरन् ।

मदोन्मत्त उपस्थाता सर्वेषां समक्षमेव प्रदर्शितानुरागस्तस्या कम्बुकमनीये उन्नतबन्धुरे कन्धरे सप्तावलिहारं स्वहस्तेनाबध्य हस्तमायोज्यान्तःपुराभिमुखं गन्तुमना अभवत्। एतत्सङ्केतेन सर्व एवोत्थाय अपसृत । अहञ्च कथमपि जनव्यूहं प्रतीर्य तमुपेत्य चनभ्यस्तदैन्योऽपि तं प्रसादयन्नवोचम् 'स्वामिना समयो दत्त" इति। परं मैरेयमत्त कशीकृतकामिनीसमुपारूढगर्वो विगलितदन्तश्च्यवदोष्ठोऽस्फुटवाक् भर्त्सयन्नाह—"अपेहि नायमनेहा" ।

अथाह वहिरुपेत्य सहयोगिनं सूचयित्वाऽचलम्, द्वाःस्थ पुनरुपहाराय हस्तं प्रासारयत्।

'एतादृशस्य धनिनो द्वाःस्थस्त्वं किमु अस्मान् खेदयसि ? समुद्रे क्व बिन्दोः स्थानम्" ? अहमवोचम् ।

"क्वात्र धनम्। स्वामी प्रतिमासं पञ्चविंशतिमुद्राः प्राप्नोति शासनतः, व्ययश्च प्रतिदिनं पञ्चशतम्। वर्षद्वयं व्यतीतम्, मासिकं मुद्रात्रयमेव न लभ्यते। शिशूनां पालनं भवादृशानां दययैव सम्पाद्यते" स उदतरत् ।

*        *        *        *

वयं समयात् पूर्वमेव न्यायालयमुपेता । वाक्कीलस्यान्वेषणमारब्धम्। तत्र जनसमुद्रेऽन्वेषणमेव दुष्करं नवीनेन। परं तस्य लेखक उपलब्ध । सोऽब्रूत यदद्य गानवाद्यरसिको वाक्कील उपवनभोजने कस्या अपि गायिकाया सम्मानभोजने सम्मिलित इति। पञ्चसहस्रमुद्रा गृहीत्वापि देशसेवकानां प्राणै क्रीडां विचार्य मनो घृणया पूर्णम्।

न्यायालयो जनसमुदयेन परिपूर्ण । अप्राप्तस्थाना बहिरजिरे वृक्षाणामालवालेषु

अथ समस्मिन् नगरे सर्वेषु कर्मसु हरिताल[1] प्रसृतम्। नगरस्योद्युद्धयो न्यायालयमुपेताः। कारावासिनः सैनिकसुरक्षिताः समये समागताः। कारावासिना सङ्ख्या अधिकाऽऽसीदतो दर्शनागन्तुमाज्ञप्ताः। आगतमात्रा एव ते "वन्दे मातरम्" "जयतु स्वतन्त्र भारतम्" "उत्क्रान्तिर्जीवतात्"—इत्युद्घोषैर्विष्णुपदमेव व्याकुलयामासुः। असह्यस्येयजनगलनादिना ध्वानेन न्यायसमितेरासनमेव दोलायितमभूत्।

कारावासिनः पुष्पमालाभिराच्छन्ना आयस गृहमानीताः। मृतभुशुण्डीकाश्च सनिकाना पङ्क्तिरभितः सज्जाऽऽसीदेव।

शासकीयप्राड्विवाकोऽभियुक्तानामपराधं पुन. श्रावयामास।

(१) अभियुक्तैर्मुग्धा जनता महाप्रताप राजान द्रुह्यन्ती कारिता। राजद्रोह।

(२) सभाया बहवो वधा जाताः। नरहत्या।

(३) दुर्बलमनसां मनस्सु दुर्भावनां सङ्घर्षभावनाश्चोत्पाद्य तेषा दुर्गतिकरणेन प्रजाना दौःस्थ्यम्। आदिरादिः।

प्रतिदिन होराष्टकमेतत्कार्यं प्रचलदासीत्। शतशः साक्षिणो भारतीया अपि स्वतन्त्रताप्रद्वेषिणा विरुद्ध मुद्रालोभेनानृतं वक्तुं सज्जा. स्थिरीकृता आसन्। अभियोगोऽयमादशःयो वर्षेऽन्यथलन्नासीत्। अपराधिषु बहवो राजपुरुषैः परुष ताडिता देहमत्यजन्, केचन रुग्णाश्चिकित्सालयेषु न्यवसन्। शासनस्य निःशतलक्षमुद्रा अस्मिन् व्ययिता आसन्। पर कार्यं निर्णयाभिमुख नासीत्। अतः शासनेनैका विशेषा समिति र्घटिताऽऽसीत्। अतः सर्व बलं सर्वैः समयेऽस्मिन् कार्ये लग्न आसीत्। पण्डितपुत्र प्राप्त्याभियोगे जीवन समेतम्। अन्ततोऽन्तिम प्रतिपरीक्षणदिनमभ्युपेतम्। न्यायाधीशाना मण्डलं चर्चरायिताभिरुपानद्भिर्मसृणकृष्णपरिधानैः प्रलम्बेन भ्राजमान ग्रीवाबन्धनेन[2] चक्रदण्डेनोपनेत्रेण मणिबन्धघटीं पश्यत् सम्मानितै उच्चैर्भव्ये कक्षे यथास्वमासनेपूपविष्टम्। सम्मुख एव वाकीलानामासन्य. सज्जा आसन्। पुस्तकेषु उद्धरणसौविध्याय दत्तपत्रखण्डा. सहयोगिभिस्तर्कसंग्रहकुशलह्पेताः परपक्षखण्डनपण्डिता. वाकाल्य

१ संस्कृताध्येतारोऽशुद्धपदेषु हरितालमायोज्य सूचयन्ति स्म "इदमन्यवहार्यम्" एवमेवायतने कर्मावरोधे। नायं, हट्टतालस्यापभ्रंशः। तालकवाचकस्य तालस्य संस्कृतवाङ्मयेऽभावात्। २ न्यकटाई।

अभ्युपेताः । अस्माकमातङ्कवादसहस्तदोऽपि कथयति स्म शासकाः ? एतदुपनेतः श्वेतस्वेदस्नातः पुलकोद्गतचक्षुरागतः । होराचतुष्टयं यावदन्तिमं प्रतिपरीक्षणं जातम् । केशनिर्मोकसोचितत्वकां न्यायालयाजिरं मोहमानाप्तः । शेषेऽस्माकं निर्विकल्पमवस्थित आसीत् । जनकरतलध्वनिना वन्दिदवाणीप्रवाहः प्रचुरोत्साहः कृतसन्नाहः स न्यायाधीश-मण्डलमभिमुखीभूत्वावदत् । सर्वे श्रोतारश्चित्रलिखिता इवाभवन् । यदा कदा जनकरतल-ध्वनिस्तत्रबाधाप्यात् । तस्य भाषणस्य सारमिदमस्ति ।

यदि कश्चन स्वभ्रातरं शिक्षयितुमुद्यते तु स्वावलम्बनाय स्वोन्नत्यै वा प्रयतते स किं सापराधः ? देशं स्वतन्त्रयितुं सेवकसंघटनं तेषां कर्मठतोत्पादनञ्च तेषां नैतिकमुत्थान न राजद्रोहः । शासनस्य प्रणालीं समालोचयन् स्वस्थचेताः किं द्रोग्धा ? दुष्कोचितां स्वार्थसाधनाय परान् पीडयमानानामधिकारिणां समालोचने किं राजद्रोहः ?

असंख्याता नरा नार्यश्च कारासु निगडिताः, बहवो वसन्ता वीतास्तेऽद्यानभियोगा एव कारासु सीदन्ति, राष्ट्रं तेषामावर्त्यं चिन्तितम् । भारतं स्वतन्त्रयितुं कष्टं सहमानेभ्यो यदि दण्डः दास्यते, यद्यपि तेऽधुना दण्डमेव भुञ्जन्ति बहुभिर्वर्षैः कारासु कष्टं सहन्ते, तेनात्यधिका विरोधिनी भावना भारतीयेषु जागरिष्यति, येन शासनस्य महती हानिः सम्भाव्यते ।

स्वोन्नतिः स्वातन्त्र्यं सर्वतः प्रथमो धर्मः । देशभक्तो देशोद्धारकार्यं यदि भजति तदा न कोऽप्यपराधः । अयं नागरिकाचारोऽस्ति सदाचारो गण्यते । अत एव निर्दोषाः । अफजलखांवधापराधमाश्रित्य निकृष्टोऽपि शिवराजो राजनीतौ न क्वापि सापराधो गणितः । स्वोन्नत्यै कदाचन स्वधर्मसिद्धान्तप्रतिकूलमपि समाश्रयन् न हेयो गण्यते ।

स्वातन्त्र्यं सर्वेषां जन्मसिद्ध ईश्वरप्रदत्तोऽधिकारः । स नरहत्यापराधी यः स्वेच्छया परान् वशीकृत्य मारकरूपेण प्रहरन् सफलो भवति । आश्चर्यम्! शासनविहिता हिंसा लोकहितस्कन्धेष्वारोप्यते ! सर्वा हिंसाः शासनीयराजपुरुषैः कृताः । अतो नस्त्ये-पन्नीमानपि दोषः । न्यायस्य मर्यादामानेतं सर्वथाऽदोषाः । न्यायस्य परिपाट्याः रक्षा न्यायालयस्य प्रधानं कर्म इति ।

न्यायाधीशानां कृते सङ्कटमुपस्थितमासीत् । परीक्षणप्रतिपरीक्षणेन तेऽभियोगतथ्यं सर्वथाऽवागच्छन् । तेन कारावासिनामपराधः प्रमाणितो नाभूत् । परं व्यवहारमपि ते दण्डव्यवस्थां ददुरेव । द्विवती तेषां निरपराधोद्घोष्य मुक्ता । त्रिवती दशवर्षकारा-

वासेन पञ्चशती पञ्चवर्षकारावासेन दण्डिता। कारासु निवसतां दण्ड समाप्तप्राय आसीत्, अत सर्वे तत्क्षणमेव मोचिता पौरप्रतिष्ठानस्य विशाल भवनमुपेता जनसमूहन सोल्लास सत्कृता रात्रावेव चित्रपुरमायाता।

कार्त्तिककृष्णपक्ष। दीपावलीमहोत्सवो बहुभिर्वर्षै रुद्ध आसीत्। मृत्युमुख विशता कोऽवसर उत्सवस्य ? सर्वे दीनवदना अलिप्ताशा हतोत्साहा हीनहासा दृश्यन्ते स्म, तेषु महोत्सववार्त्तावार्त्तिकरी। सर्वेषु कारावासिषु मुक्तेषु राजाज्ञयोत्सवश्चक्रे। सुधा कारिणा कारुणा महघता सम्पन्ना। तैरद्योरात्र गृहाणि धवलयद्भिर्भोजनवेलैव न लब्धा। इत पटरागिणा काष्ठरागिणामप्यभाव। सर्वेषा सुखे मनसि चानन्द। सर्वेषा करौ पादौ च परिमार्जने लग्नौ। गृहा अवकरनिकरव्याप्ता विपणयश्चाव सङ्करकूट मुदगिरन्। पौरप्रतिष्ठानस्य भृत्या सरणिसङ्करपरिमार्जनाया प्राचुर्येण व्यग्रा अनवरत महिषैगर्दभैर्वहन्तो व्याकुला आसन्। नगरे नवीन जीवन समेतम्। सुधालिप्तैर्गृहै, रागरक्तैश्चित्रचित्रितैस्तैलस्निग्धै कवाटैश्च नगर विचकास। मलिन मालिन्य ह्रिया गर्त्तगतमभूत्। सरणानि जननिरीक्ष्यता भेजु।

महालक्ष्मीरात्रौ प्रदोष एव गृहेषु विचकसुर्दीपावल्य। विविध न्यस्ता दीप पङ्क्तयो ससरण दीपयामासु। विलक्षणराग प्रकाश प्रकाशते स्म। कान्दविकाश्चैत प्रसादयद्भिर्लालामाश्रोतयद्भि स्वर्णरजतपत्रलिप्तै सवैचित्र्य न्यस्तै काचमञ्जषा जुष माणैर्मिष्टान्नै विपणि पूरयामासु सौन्दर्येण। इत फलविक्रतारोऽपि दाडिमजम्बीराङ्गूरै स्वरञ्जितपिठरा पुरुषानाकर्षयामासु। वस्त्रापणिकाना विपणयोऽद्य प्रोज्ज्वलाभासैर्वासोभि दीप्यन्त स्म, येषु पटप्रभा द्विगुणयन्त प्रकाशा अवलम्बन्ते स्म। मनोहरमञ्जूषासु विधृत स्वणरजतभूषणा भूषणविक्रेतारश्च चक्षूंष्यशयन्ति स्म। ताम्बूलिकाना विपणिष्वद्य मेलापक इव लक्ष्यते स्म। तेषां वार्त्तविकाश एव दुर्लभ। परिणामे परिदेविनो द्यूतदेविनश्चाद्य राजाज्ञयाऽदीव्यन्। युगपद्धवनोद्धरस्तेषा कोलाहल आकाशमपि व्याकुलयति स्म। तेषु केचनाहसन्, परे उदासत।

अभितो वेदध्वनय श्रूयन्ते स्म। विभविनां भवनेषु गायका गायन्ति स्म। रमणीभूषणशिञ्जितानि विजयन्ते स्म। पट्टवासवासितवसना परस्परालापप्रकटितप्रेमाण पुरुषा प्रेक्ष्यन्ते स्म। यथारीति सम्पन्नोऽभूदुत्सव।

वासेन पञ्चशती पञ्चवर्षकारावासेन दण्डिता। कारासु निवसतां दण्डः समाप्तप्राय आसीत्, अतः सर्वे तत्क्षणमेव मोचिताः पौरप्रतिष्ठानस्य विशाल भवनमुपेताः जनसमूहेन सोल्लास सत्कृता रात्रावेव चित्रपुरमायाताः।

कार्त्तिककृष्णपक्षः। दीपावलीमहोत्सवो बहुभिर्वर्षै रुद्ध आसीत्। मुहुर्मुहुरा दिशतां कोऽवसर उत्सवस्य? सर्वे दीनवदना अर्पिताशा हतोत्साहा हीनहासा दृश्यन्ते स्म, तेषु महोत्सववार्त्तावार्त्तिकरी। सर्वेषु कारावासिषु मुक्तेषु राजाज्ञयोत्सवश्चक्रे। मुत्कारिणां कारूणां महर्घता सम्पन्ना। तैरहोरात्रं गृहाणि धवलयद्भिर्भोजनवेलैव न लब्धा। इतः पटरागिणां काष्ठरागिणामप्यभावः। सर्वेषां मुखे मनसि चानन्दः। सर्वेषां करौ पादौ च परिमार्जने लग्नौ। गृहा अवकरनिकरव्याप्ता विपणयश्चाथ सङ्करकूट मुद्गिरन्। पौरप्रतिष्ठानस्य भृत्याः सरणिसङ्करपरिमार्जनायां प्राचुर्येण व्यग्रा अनवरत महिषैर्गर्दभैर्वहन्तो व्याकुला आसन्। नगरे नवीनं जीवनं समेतम्। सुधालिप्तैर्गृहैः, रागरक्तैश्चित्रचित्रितैस्तैलस्निग्धैः कवाटैश्च नगरं विचकास। मलिनं मालिन्यं ह्रिया गर्त्तगतमभूत्। संसरणानि जननिरीक्ष्यतां भेजुः।

महालक्ष्मीरात्रौ प्रदोष एव गृहेषु विचकसुर्दीपावल्यः। विविध न्यस्ता दीप पङ्क्तयो ससरण दीपयामासुः। विलक्षणरागः प्रकाशः प्रकाशते स्म। कान्दविकाश्चैतः प्रसादयद्भिर्लालामाश्चयोतयद्भिः स्वर्णरजतपत्रलिप्तैः सवैचित्र्यं न्यस्तैः काचमञ्जूषां जुषमाणैर्मिष्टान्नैर्विपणि पूर्णयामासुः सौन्दर्येण। इतः फलविक्रेतारोऽपि दाडिमजम्बीराङ्गूरैस्तरङ्गितपिठराः पुरपथानारदर्शयामासुः। वस्त्रापणिकानां विपणयोऽद्य प्रोज्ज्वलाभासैर्वासोभिर्दीप्यन्ते स्म, येषु पटप्रभा द्विगुणयन्तः प्रकाशा अवलम्बन्ते स्म। मनोहरमञ्जूषासु विधृतस्वर्णरजतभूषणा भूषणविक्रेतारश्च चक्षुर्वञ्चयन्ति स्म। ताम्बूलिकानां विपणिष्वद्य मेलापक इव लक्ष्यते स्म। तेषां वार्त्तावकाश एव दुर्लभः। परिणामे परिदेविनो द्यूतदेविनश्चाद्य राजाज्ञयाऽदीव्यन्। युगपद्वचनोद्भवस्तेषां कोलाहल आकाशमपि व्याकुलयति स्म। तेषु केचनाहसन्, परे उदासत।

अभितो वेदध्वनयः श्रूयन्ते स्म। विभविनां भवनेषु गायका गायन्ति स्म। रमणीभूषणशिञ्जितानि विजयन्ते स्म। पटवासवासितवसनाः परस्परालापप्रकटितप्रेमाणः पुरुषाः प्रेक्ष्यन्ते स्म। यथारीति सम्पन्नोऽभूदुत्सवः।

इतिश्री—

समस्तशास्त्रशास्त्रवततिततिपुष्करभरस्य पुराणमकरन्दमधुकरस्य

महामान्यविपश्चित्तल्लजस्य श्रीनवरङ्गरायशास्त्रिण पुत्रस्य

विश्वविश्रुतविपश्चि‍न्मण्डलाखण्डलानल्पदर्पदलनदम्भस्य

तस्यैव गुरो परमानुकम्पाऽवणपात्रस्य काव्यालङ्कारस्य

श्रीनिवासशास्त्रिण

चन्द्रमहीपतौ निरगादयमष्टमो नि श्वास ।

अखिलवैदुष्यरूपया श्रिया युक्ता य विद्वासस्तेभ्यो रुचिरम् साधारणजनायापि नितान्त मधुरम् रसशास्त्रम् अतएव वागीशैवन्द्य किमपि वचन्—ब्रुवन् विदा रसिकाना पाणौ आहितश्चन्द्रमहीपतिनामको ग्रन्थ भुवि ज्ञानिमन चिरं रमयताम्। एतस्य द्रष्टा च ज्ञानपूर्वक चक्षुषा पयवसको ऽध्ययनशील मयूखैरिव विविधैर्विषयै महित युक्त अतएव गुणै अहीन =पूर्ण सता कृपा यस्मिन् एकभूतो भवेत्। तस्यायमष्टमो नि श्वासो ऽगात्। पद्यऽस्मिन् श्रीनिवासशास्त्रिणा विरचितश्चन्द्रमहीप —इतिवाक्य नि सरति।

———

## नवमो निःश्वासः

विद्वज्जनसम्पर्को नष्टेष्टज्ञातिदर्शनाभ्युदयः ।
कस्य न सुखाय भवने भवति महारत्नलाभश्च ॥
मीनवती नयनाभ्यां चरणाभ्यामपि प्रफुल्लकमलवती ।
शैवालिनी च केशैः सुरसेयं सुन्दरी सरसी ॥
अद्यापि तां कनकचम्पकदामगौरीं
फुल्लारविन्दनयनां तनुरोमराजिम् ।
सुप्तोत्थितां मदनविह्वलसालसाङ्गीं
विद्यां प्रमादगलितामिव चिन्तयामि ॥
सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥

रचना विरच्यमानाऽनुपदं क्लेशयति नव्यवल्लीव ।
कालेन परिचिता सा सुखरा गलभूषणीकर्तुम् । अत इयमस्य दाम्नेन म् ।

शशिधरो मनोमोदिन्या कुमुदिन्या प्रचितवत्स्या चपल्या सहदन्यनदतदचन्दना सरोजिन्या च सहितः समागतो राजनगरम्, सर्वोऽपि चन्द्रस्य च वृत्तं राज्ञः पुरो न्यवेदयन्। सरोजिनी चन्द्रमसं विना प्रभातमिव नन्दनवनसमीरं विना कुसुमितवनमिव प्रेयांसं विना नाधिकमराजत, किन्तु किंकुर्यादन्तत एकाकिन्येव वधूपादौ स्पृष्ट्वा प्रासादं प्रविश्य। चन्द्रविलम्बे शशिधरस्य सरोजिन्याश्च विशेषतः शङ्कितमभूच्चेतः, परं परमविनोदिनोऽस्य सम्भाव्यते विनोदविलम्ब इति विचार्य किञ्चित्स्थैर्यं बभूव मनः। मास ऋतुरयनम्, अनन्तरौ वर्षे, सर्वाण्ययानीव व्यतीयुः। शतशः सूदाः दर्शिता निमग्ना, सुदीर्घाणि महान्त्यायुः स्थानानि बभूवुश्च। विशाला निशा राज्य तेनुर्नगरस्य, विटपा विचकम्पु कन्दमानवाचत-स्थिरे च। परं चन्द्रो न समागतः। महाराज्ञो विचित्रदर्शनदर्शच्छिधर प्रतिदिनं खेदयति।

पुनः पटवः प्रेरिताः, पुनर्वियोगवारां निधेः शोकसागरस्य च प्रवाहोद्गाराः प्राबल्यं प्रापुः। मालिन्यं पुनर्मनुजमुखमण्डलान्यभजत। महाराजे मन्त्रिणा मन्त्रयति द्वास्थो गुप्तविभागाध्यक्षागमनमसूचयत्। इङ्गितज्ञः स तं प्रैषयत्। स च निः प्रणम्यासूचयत्—

'देव, महत्या सेनया राजनगरमधिगन्तुकामश्चिनपुरेशः समेति। शतं शिबिकानाम्, प्रतिशिबिकं निष्कोषनिस्त्रिंशानां बलवद्वपुषां पदातीनां शतम्, भोशुण्डिकानां सादिनाञ्च त्रिशती, मदमत्तमातङ्गस्थायिनां द्विशती, भल्लकराणां नराणां चतुःशती। विज्ञानबला असंख्यातयन्त्रा परा सेना, तस्या रक्षायै चाश्वारोहिणां पदातीनाञ्च दशसाहस्री। परा च मरुत्तरारूढा वस्तुजातरक्षायै पञ्चसाहस्री। सहस्रशश्च कर्मकराः सेवकाः पाचका निवेशकाः। प्रतिदिनं गव्यूतिपञ्चकं प्रचलन् वनाद्वन कृतनिवेशः समायाति।'

राजा०—दुर्दैवेऽविचारितागमना विपदः स्फीता भवन्ति। मन्त्रिन्, को विचारः?

मन्त्री—युवराजे गते सर्वत्र शिथिलता विद्यते विभागेषु, अस्यां स्थितौ सन्धिरेव गरीयान्।

राजा०—नहि नहि, एतन्न भवितुं शक्नोति।

महाराजो नवेन्दुर्वीर आसीत्। शक्तिवरप्रबलावपि गणनीयगुणावास्ताम्। एतेषां साहसगिरा निर्जीवानां मानसेऽपि साहसविक्रमाभ्यां समचारि। राजनगरसेना जगद्विदितपौरुषासीत्, चन्द्रे गते शिथिलता तामजूगुहत्, तथापि समुद्रः शुष्कोऽपि मानसं सरस्तिरस्कर्तुं प्रभवत्येव।

विभागास्त्वासन्नेव, विद्युत्स्पर्शेनेव तेष्वेका नवीना स्फूर्तिः समाजगाम। जलसेना जले वियद्वाहिनी च वियति, मरुत्तरचमूश्च स्थले सज्जिता। 'छत्रधारिसैनिका[1] स्वाभ्यासं वर्द्धयामासुः। नगरमन्धतमसेन[2] परिचितं कारितम्। समुद्रे प्रकाश[3]-स्तम्भानां प्रबन्धका नियुक्ताः। जलनिमज्जिन्यो[4] विरङ्गीकृतरणपोताः सुरङ्गाश्च[5] समुद्रे प्रसारिताः। परं परप्रपीडकास्तारपीडकाः[6] परपीडायै प्रेरिताः। आटङ्का[7] लोहस्य चञ्चला दुर्भेद्यदुर्गा भीषणशक्त्या जगदुट्टङ्कयामासुः। सहस्रघ्न्यो दलमर्दनतोपा अथ

---

१ पैराशूट २ अन्धेरा (Black out) ३ (Light-house) ४ पनडुब्बियां
५ सुरङ्गें ६ तारपीडो (Torpeedo) ७ टैङ्क (Tank)।

वैज्ञानिका बभूवुः। जगतीं सन्देहसिन्धौ जुघुक्षितुं विघोद्यमका बमाः विस्फोटबमा[1] नगरभस्मकर्माणोऽग्निबमा[2] शीघ्रविस्फुटनशीलाः,[3] समयापेक्षिण[4]श्च बमाः प्रचुरमानया निर्मिताः। गोलिकेद्वानिनीनां[5] शक्तिः परीक्षिता। नरसंहारका विषाक्ता[6] अश्रुसारिणः[7] क्षावितः[8] तोदोत्पादिनो[9] विसर्पसम्पादिनश्च गेषाः,[10] प्रलय-प्रचारेणैव भुव भीषनाङ्कक्रिरे। परप्रयुक्तान् गेषान् व्यर्थयितुं दुष्वातोपरोधिका[11]-सव्ग्रहः समारब्धः। परमसुन्दर्यौ गानवाद्यप्रचलीलाप्रदीपा वीणाकम्बुस्वरतानान्वेद[?]। [12]वाणीयन्त्राणि सैनिकवासस्थां कृते नियन्त्रितानि। तारविभागे,[13] दूरालापयन्त्रविभागे,[14] [15]आकाशवाणीप्रेषणविभागे च राजनियन्त्रणानि व्यनक्तुः। राजभवनानां धनिभवना-नामुपरि पार्श्वतश्च सिकतासंग्रहः समजनि। चिकित्सालयेषु विशेषचिह्नान्यङ्कितानि। शिशूनां स्त्रीणाञ्च कृते पृथग्व्यवस्था प्रारब्धा। भूरक्षागृहाणि[16] प्रचुरमानया स्तरस्तर निर्मितानि। वायुयानविध्वंसकतोपाः[17] भविष्यन्निर्देशकयन्त्रेण[18] उच्चतानिर्देशकयन्त्रेण[19] च संयुक्ता आश्चर्यकरं कृत्यं चक्रुः। वायुयानदर्शनाय प्रखराणि प्रकाशयन्त्राणि[20] आविष्कृतानि। समस्मिन् राजनगरे यानान्तरजालाः[21] प्रसारिताः। गुप्तभाषाप्रयोगाः

---

१ बमतीति बमः "टुवम् उद्गिरणे" 'पचाद्यच्'। विस्फोटयतीति विस्फोटकस्तस्य पदार्थस्य बमा इत्यर्थः। (High explo ive bombs) २ दाहकबम (Incandiary bombs.) ३ पृथ्वीपर गिरते ही फटनेवाले Immediate bombs. ४ टाइम पर फटनेवाले बम (Delayed Action Bombs)। ५ मशीनगन Machineguns. ६ जहरीली गैस (Poi-onous gases)। ७ रुलाने वाली गैस Tear gas। ८ छिंकने वाली गैस Nose irritant gas। ९ घुनघुनाहट पैदा करने वाली गैस Lung irritant gas। १० फफोले उत्पन्न करनेवाली गैस Blister gas। अत्र सर्वत्र गेषु अन्विच्छायामित्यस्माद् घञि 'गेष' शब्दः। अन्विच्छा = अन्वेषण-मातिं करोतीति गेषवत्। ११ गैस के असर को न होने देने वाली टोपी Gasmasks। १२ फाउनग्राफ। १३ तार। १४ टेलीफोन। १५ रेडियो। १६ जमींदोज रगाह[?]। १७ हवाईजहाज को नष्ट करनेवाली तोपें Anti Aircraft Gun. १८ जिससे यह मालूम होता है कि गोला जब वहां पहुंचेगा, वहीं जहाज भी होगा। १९ जहाज की लम्बाई मील, फीट, इञ्चोंमें मालूम करने का यन्त्र। २० अधिक पावरवाली लाइट। २१ बैलून बैरेज (Baloon Barrage) एकतरह का जाल, जिससे रगड़ लगते ही जहाज में आग लग जाती है।

सङ्केतलिपयथार्थप्रापण नवां रीतिमनुसृत्य । पक्षिणोऽपि श्वानोऽपि शिक्षामाहेदु। सूक्ष्मबुद्धय इन्द्रियज्ञाननिपुणा विविधभाषाप्रवीणा, लिपिजालान्युपा तत्त्वबोधविभागे[1] नियुक्ता ।

लघवो युद्धपोता[2] रक्षकपोता[3] सहायकपोता[4] औपचारिकपोताश्च[5] विविध सम्भारैः सम्भृता ।

अथ राजनगरस्य चत्वरान् चतुष्पथसमुद्रानभितोऽभिनव आहवकोलाहलस्वरजायते। सोऽय वारणार्थिनामोप्सित कालो वर्त्तते । अल्पश्मश्रुषु नवयुवकेष किमु प्रौढष्वपि नवीन उत्साहो मुखरीभवति । सर्वेषां करौ श्मश्रुसाधने लग्नौ स्वश्मश्रुपोषाहर्णिमा प्रश्नवे। परितो वीरतावरत्रचास्मुच्यन्ते श्रूयन्ते च । भटानां वीरभावो भेरीभङ्कारेण दुन्दुभि ध्वानेन चतुर्गुणितो भवति । युद्धवाद्यन योद्धृणा पादा स्वयमप्रतश्चलन्ति। पूर्णौजसोऽस्यतीना अश्वा अपि रणकण्डूमपनेतु सर्वप्रथम जिगमिषया कृच्छ्रेण सादि भिर्वार्यन्ते । मदमत्ता करटिनो घण्टाघोषैर्विश्व वाचालयन्त प्रावृषण्या सविद्युतो वारिदा इव अभितो भ्रमन्ति । खड्गानां खणत्कारेण कुन्ताना प्रभया भुशुण्डिकाना तोमानां तुमुलेन शब्देन शङ्खानां ध्वनिना सर्वा दिशोऽद्य परस्परमालपन्त्य इव प्रतिभा त। सर्वोच्चतुङ्गशिखरेऽभिमानलालिता जगन्मानिता कीर्त्तिलतेव विजयपताका पपरायत। सुदुरमनोहरे, निमलनिमले, प्रोच्चप्रोच्च आकाशे हर्म्याणा कनककलशा, विरोचनकिरण कुलेन धौता इव विश्व विहसन्ति । तत्र तत्र वातायनेषु स्थिता सौभाग्यसुन्दर कमनीया कन्याश्च पुष्पाणि पुष्पमालाश्च विकिरन्ति । यत्र तत्र वन्दिवृन्देन वीरवराणा वर्णना वर्ण्यन्ते । भगिनीभिर्भ्रातृभाला भूष्यन्ते । कश्चन सवर्मयति, इतरोऽनुलोमयति परोऽभिषेणयति ।

मन्त्रणामन्दिरे मन्त्रिणो मन्त्रस्यापक्षीणतामक्षीणयितु सप्रयत्ना प्रतीयन्ते। अभित सतर्का धृतद्विनलिका सैनिकप्रहरिण सदर्प भ्रमन्ति । एको दूतश्चित्रपुरनामा द्वितपदकप्रतिष्ठ आगत्य प्रहरिणमसूचयद् यत् स चित्रपुरेशस्य पत्रवाहकोऽस्ति

१ सैन्सर । २ छोटा जगी जहाज Sloop । ३ Escort ship ४ Auxilary Vessels ५ Hospital Ship

महाराज दिदृक्षते" इति। प्रहरी च तं प्रहरिपत्रकमध्ये न्यस्य, तद्वृत्तं सभाम्ध राजानमसूचयत्। स च तस्यागमनं दूतागमनविधिनाऽनुमुमुदे। अक्षिनिबद्धपट्टिकः स परितः आसन्नसभ्यायां परिषदि समागत्य महाराजं ददर्श यत् कुङ्कुमेनाङ्कितोऽञ्चितोऽकुण्ठितः शास्त्रेषु गुम्फितो गुणरत्नैः, अनुस्वारस्य यथि परसवर्ण इव सोदाहरणो राजा राजते। तत्र त्रिः प्रणम्य जननैर्विविधभावभङ्ग्या वीक्ष्यमाणः पत्रं प्रादात्। महाराजः पत्रं पृष्ठतोऽवलोक्य मन्त्रिणं पठनायादिशत्। अमात्यश्चोद्घाट्य प्रपठ्य हृष्टो राजानमप्यश्रावयत्।

श्रीमत्तेजःशान्तस्वान्तसमस्तसामन्तदेदीप्यमानागणितमणिखचितमौलिमुकुटछटोज्ज्वलनखदीधितिततिनाशिताशेषभयतमस्सु, असन्त्रस्तप्रजामुखाट्टहासप्रकाशसमुत्पन्नयशःपुञ्जसितीकृतत्रिविष्टपेषु प्रत्यग्रभास्करायमाणेषु श्रीपितृचरणेषु सादरं सस्नेहं क्षमायाचनपुरस्सरं प्रणमति।

| | |
|---|---|
| चिनपुरम् | भवता सुचिरवियुक्तः कुपुत्रः चन्द्रः। |

अथ चन्द्रस्य पत्रमिदमिति सुचरितेष्वखिलेषु शोभनमापतितमिति विचारयत्सु पौरम्मन्येषु भ्रमव्यग्रे च राजनि पत्रवाहकेन सह मन्त्रिण एवमभूदालापः—

"कुशली कच्चिच्चन्द्रो महाराजः?"

"आं देव।"

"जाने क्षत्रियोऽसि।"

"आं देव।"

"शरीरेण स्वास्थ्येन पुष्टश्चन्द्रः?"

[ स्वकीये रात्रि एतत्प्रयोगेण खिन्न इव ] "आं देव।"

"किं महत्या सेनया चिनपुराधीशत्वेन समायातश्चन्द्र एव?"

"आं देव।"

"चिनपुरत एव त्वां प्रहितवान्?"

"आं देव।"

"तदा किमस्य सरिकयामपेक्षते स ?"

"आं देव !'

"तर्हि स्वयं वयमायास्याम ।"

"आं देव !'

'किं चन्द्रेण 'आं देव'—इत्येव कथयितुं नियुक्त !"

"आं देव !'

वार्त्तैव परिवर्त्तिता। इन्द्रायणयाराम्रनिम्बयो, दीनारकपर्दयो, सुभिक्षदुर्भिक्षयो युद्धयध्येरिव भेदा बभूव। शत्रोरभिमुखं प्रयात्री महती सेना चन्द्रस्वागत चिकीर्षया प्रोज्ज्वलमाना बभूव। कणाकर्णिकया क्षणेनैव समाचार सर्वत्र प्रसृत। मलिनमुखे नगरनेरे विलक्षणा दीप्तिरागता। सर्वे सम्मिल्य पताकाभि सत्तरणसेचनै परिमलविटपयासैमालामालाभिर्द्वाररचनैश्च पुर पुरन्दरपुरयमासु।

* * *

हारकपञ्जरस्थकीरगिरा विघूर्णिते प्रासादे रम्यासन्द्यामासीना राजमाता। भित्ति भजमानाना भ्राजमानानां विटपाना पुष्पलतानां सौन्दर्यं भवनसौरभ्यादाय धीरधीर समीरो विश्वस्मिन् वितरितुमिव वाति। सरोजिनी च सत्यपि सखीशते दासीसहस्रे परमप्रेमप्रह्वप्रणया स्वयमेव लघुना व्यजनेन व्यजयति। करकलितकीरा कुमुदिनी च शिल्पिनो नैपुण्यवीक्षणे निमग्नचित्ता अधस्तादुपरिष्टात् पार्श्वतश्च हर्म्यस्य रचनां सौन्दर्य दौर्बल्यं द्वाराणि अवस्थानञ्चेक्षते। सैव हर्म्यरक्षायै अधिकृता। शतशो दास्यस्तस्या आज्ञया परितो भ्रमन्ति। एका दासी तस्या कर्णान्तिकं शनैरवोचत्। सा च सरोजिनीम्।

सरोजिनी०—सत्यं कथयसि वा व्यामोह ?

कुमुदिनी०—व्यामोह ? महाराजमुखाच्छ्रुतम्।

सरोजिनी०—किं श्रुतम्।

कुमुदिनी०—यच्चित्रपुरेशत्वेन तव सौभाग्यसिन्दूर समायाति।

सरोजिनी०—कास्ति द्वारि।

वेदारिणी०—( प्रविश्य ) आज्ञाप्यता महाराज्ञि!

सरोजिनी०—ज्ञातो राजसभासंवादः ।

*　　　*　　　*

योजनदीर्घः समारोहोऽयं नगरसरणीनि व्यापत् । हर्षवर्षप्रसन्ना भूमिरुहीव आकाशमपि विदितवृत्ता चचार । तोषपूर्णां निनदेन दिशोऽपि विज्ञपिता ।

समये राजभवनं प्रविश्य अश्रुस्नपितपितृपादः पितरं मोहमुग्धमुखीं मातरञ्च प्रणनाम चन्द्रः । प्रणेमतुश्च हर्षभुवनेशौ ।

अथ सरोजिनी कविकामिनीव हृष्टा प्रोच्चविचारा कमलां प्रणम्य प्रश्नशतेन कुशलमपृच्छत् । कमला च कमनीयाङ्गुल्या चम्पां निर्दिशन्ती सर्वमसूचयत् । करुणमनसा सरोजिनी च प्राणप्रियाणामेतां विपत्तिं संश्रुत्य नाशक्नोद्रोद्धुं बाष्पाणि ।

*　　　*　　　*

"देव, महतो दुःखस्य विषयः, महामात्यो विद्याधरः सन्ध्याक्रान्तोऽस्मान्विजहौ" —कम्पवक्षेण भृत्येन महाराजो नवेन्दुर्न्यवेदि ।

"आः विद्याधरो दिवं गतः, अर्जुनेव मया सह बहुशो गाढ्मियोजनात्सावध्य गतो मतश्च हन्त ? कीदृक् क्षणभङ्गुरमिदं शरीरम्, कीदृशो व्यामोहः, अतीतिर्मानिकीव वयः, तिस्रः परमसुन्दर्योऽप्सरस इव सुताः, सोदर्यौ ज्ञातकल्पाः मृदुलस्वभावाश्च, प्रियतिसा जगद्भ्रमणविपुलप्रतिभश्चन्द्रः गुणनौ पौत्रौ, सुन्दरम्यप्रमत्तं राज्यम्, तथापि नाहं लब्धसुखोऽहं, अनन्तेव मोहनिद्रा हन्त !

"वत्स ! यत्नमायोऽत्र शीघ्रं मां गुरुसमीपं प्रापय—" नवेन्दुना प्रोक्तम् ।

*　　　*　　　*

"गुरो ! कीदृगयं संसारः कथमस्मादावर्त्ताद् बहिर्गन्तुं शक्यते" ?

राजन्, अज्ञानमेव बन्धनम् । अजानन् यथा पुमान् मरुनगरे भ्रमनमुभवति वस्तु दुःखं तथा न जानन् । ज्ञानमेव मोक्षः, अज्ञानमेव बन्धनम् । ऋद्धिरियं मायानिद्रा । नात्र सुखम् । पुमानलोकसुखतया भ्रमन् दुःखमेवाप्नोति । सुखं तु केवलं भगवत्तत्त्वानुसन्धानम् । त्वमपि वैकान्ते निवसन् मदुपदेशविधिना ध्यानिमार्गो न चिरेण ब्राह्म्यमधिगमिष्यसीति मे विश्वासः

*　　　*　　　*

"धन्य पण्डित, किं नाम भवतः" ?

महाशय ! मा जना के के शास्त्रीति भाषन्ते"।

के के शास्त्रीत्यस्य कोऽर्थः ?

के के०—अर्थन्तु भाषका एव जानन्ति परं लोके भाष्यते नामैतत् सैनिक !

सैनिक०—( सहसम् ) एतदेव पृच्छ्यतेऽनर्थकं सार्थकं वैतत् ?

के के०—को जानीते।

सैनिक०—क्व ब्रह्म व जानाति ?

के के०—( अनपेक्ष इव ) सम्भाव्यते।

सैनिक०—( सादरम् ) मपत्वाय। उत्कण्ठाकलितचेतसा पृष्टम्।

के के०—केचन कविताकामिनीकान्त परे च कमलाकान्त इति स्वरूप प्रकाशयन्ति।

सैनिक०—आ एवम् ! आडम्बललिप्यनुरूपम् ( स्मितिद्विरम्य ) किं क्रियतेऽत्र महानुभावेन !

के के०—किं क्रियते अस्मिन् काले किमपि कर्त्तुं शक्यते ? कः पृच्छति पण्डितान्नव कोऽद्य पिपठिषति संस्कृतां वाचम्। दोहासवैयारचयितॄणामल्पज्ञानां केवलं कण्ठमधुरिम्णा मोहयितॄणां तथाकथितानां नवीनानां कविम्मन्यानामद्य सम्मानं। साद्य जगद्धात्राजनन्यपि विश्वे नोच्यमानापि विभिन्नरूपेण, मृतभाषेति शब्द्यते म्लेच्छभाषाविद्भिरज्ञैः। संस्कृतज्ञाना सुदुस्तरतरा दारिद्र्यापगा प्रतिदिनमेधते। यदा प्रतीक्ष्यमाना मानमहोदधिचराश्चक्रवर्त्तिभिरपि प्रत्यहमर्च्यमानचरणयुगलचरा सम्प्रति अविगणय्य अम्बरमध्यगणितगभस्तीन् खेदलाता प्रतोलीतः प्रतोलीं पर्यटन्ति बचकव। येऽञ्जलिजलमानतुष्टास्तपोधना राज्ञोऽपि वाहीकृत्य न्लु सक्रोधधु येषु लोकपालानामपि त्यक्तस्थैर्यं मन त एवे प्रक्षीणतपोवैभवा अज्ञातजातीना धनिनां गृहेष्वनाहूता यान्तो विना प्रणाममाशिषं वदन्त उद्गारे जम्भणे च चिरञ्जीव इत्यादि ब्रुवन्तो मिथ्याचाराः ध्वाङ्क्षायन्ते।

असत्योदकोच्चयताधिगतधनाश्चरिनाचारविरहिता धनिनश्च समुद्रफेनसुधासारकारण्डवपङ्कपटलायितसितहितशीतवसनविभूषिता कुन्तलतल्पपरिमलेन भवनमामोदयन्त पञ्चद्वारलमोशीरा शीततापनियन्त्रेण सेव्यमाना राजतपादपेषु मञ्चेषु स्थिता

वेधसमिव तन्वन्तः स्वस्योत्पादकान् वर्द्धकांश्च ब्राह्मणान् भर्त्सयन्ति । धर्मरक्षकाः प्राधान्येनासन् क्षत्रियाः, परं तेऽधुना मांसे मद्ये च शौर्यं चिन्तयन्तो निःक्षा जठरज्वालानिर्वापणपटवः स्वन्तोऽनुपनीता व्रात्याः कन्याहननपातकिनः परस्परविरोधविनाशितबला विशां ललाटिका कुर्वन्तस्तेषां पुत्रोत्सवे सम्मानं लभन्ते ।

यवनाश्च विलासाचारपावकाशमेव न लभन्ते दुराचारा वस्त्राभक्ताः ।

वैनिक, विचित्रचरित्रोऽयं कलिस्तत्रभवतोऽर्वाचीनकारणबन्धून् एकोऽपि भिक्षुकान् करोति, धर्ममूर्तीन् हरिश्चन्द्रादीन् शकृच्छोधनजीविनः श्मशानसेविनो निष्फलस्य नृपस्य तनुपनयति सौदासमिव नरभोजित्वं प्रापयति ।

श्रूयतामस्मिन्नेव नगरेऽस्माकं युवराजश्चन्द्रो विद्याबुद्धिविवेकवित्तोऽपि प्रवसा-प्रणयपूजनप्रेम्णा विलासासक्तः समयमतिवाहयति । पिता योग्यश्चावलाधीत्, बहवः प्रतिज्ञा अनेन कृतचराः प्रजातन्त्रपद्धत्या शासनमनेन प्रतिज्ञातचरं परमधुना मधुना हृतविवेकः क्व स्मरतु, प्रेमसानुपुरस्कृतौ क्व प्रजाकष्टं शृणुयात् ।

वैनिकः—सत्यं देव ! एतदेव जातम् । परं चन्द्रो हृदयेन शुद्धः सद्विचारश्च, परिस्थितिवशमेवम्भूतनकार्षुः । अहं चन्द्रस्य सन्निकटः स शीघ्रमेव स्वप्रतिज्ञानुसारं चिकीर्षति । परमेतन्निश्चितं यत्तस्योद्यानं नाल्पीपरिमलेन चम्पकसुरभिणा बकुलगन्धेन शुकपिककलहंसकलरवैरनेकान्देलुब्धानां षट्पदानामहर्निशगन्धेन सुशोभितमासीद् कुटिलकालकटाक्षदृष्ट्याहितं धूलिधूसरितं श्मशानायितं जातम्, परं चतुरो मालाकार इव स तत् शीघ्रं पुनरुज्जीवयिष्यति । स न मद्यपो न च स्त्रीभक्तः । तस्य विरहनयननीरपरिस्थित्या जातम् । सरोजिन्या विवाहः कमलाऽऽग्रहेण । कमला च कमलां मृता विज्ञाय राज्यप्रत्यावर्तनानुत्सुकश्चन । तस्य स्निग्धोऽपि पुरुषनिर्विशेष-राज्यकर्मनिपुणास्त्वं प्रजातन्त्रपद्धतौ प्रेरयन्ति । श्रूयते स स्वाः स्त्रिय एव विभिन्नप्रान्तेषु राज्यप्रतिनिधित्वेन प्रेषयितुमिच्छति । किन्त्वेतद् सर्वथा सत्यं यद्विपरीतायते कालः । प्रत्येकस्मिन् क्षेत्रे विपरीतमेव स्थितिं पश्यामः । श्मश्रुशालिनः पुरुषाः पुरा वरा गम्यन्ते स्म, अधुना न शिरसि विन्यस्तकेशा निर्दुःखाः स्त्रीनिर्विशेषा एव वैशिष्ट्यं लभन्ते । कलवली यथा प्राकृतिकानां करं करवत्त एवाधुनिकानां तथा वसुधां वशयति ।

पूर्वे पुरुषाणामाज्ञया स्त्रियोऽधुना च ता एव वाम दक्षिणयन्ति। प्राचीनाना वामिता यथा तथैवाधुनिकाना धूर्त्तता।

नवीनाः सम्प्रदाया प्रतिदिन प्रेक्ष्यन्ते। जगति जागरूकदम्भारम्भा जना जठरपिठर-पूरणाय अविवेकिजनवञ्चनाय सुतरा स्वपरिवारपूर्त्यै मिथ्यायशःप्रचाराय च नवीन सम्प्रदाय प्रचारयन्ति। नवीनत्वञ्च प्रचलितविपरीतत्वम्। जगत्प्रचलितस्य सम्प्रदायस्य व्यवस्थापका जटिला मुण्डिनो वा, अतो नवीनैः केशा लुञ्च्यन्ते, प्राचीनाः स्नान्ति जनतां परोपकाराय प्रेरयन्ति च, नवीनाश्चास्नान्तो मातापित्रोरपि सेवा कदर्थयन्ति। चन्द्रमुख्य कमलिनीकमनीयतनुलताः कदलीकोमला बालिका. परलोकताडिण्यादिपदैश्चाटुशतैः प्रवञ्चन-वचोभिः प्रलोभ्य यौवने पदमर्पयन्त्यः प्रार्थिता अनेकैर्वरैः प्रथिताः पृथुगुणैः केशान् विलुच्य वास पट्टिका मुखे आबध्य स्नानज्ञानाचारसंस्कारान् सर्वथा परित्यज्य केवल विषयनिरतैः ( केवलिभिः ) छद्मधर्मगर्त्तेषु पात्यन्ते।

के० के०—अक्षरशः सत्य कथयसि।

सैनिक.—भगवन्, जगत स्वाभाविक एव धर्मः। नद्या. प्रवाहोऽपि नैकत्र स्थापयितुं शक्यते, किं पुनर्मानवानां चञ्चला प्रवृत्ति। विचाराः प्रतिक्षण परिवर्त्तन्ते। अस्तु, अह देवस्य परिचय श्रोतुकामः।

के० के०—स्वल्पीयान् कविरहमस्मि, सोऽहमधुनाऽत्रस्थ इति गृहीतावकाशो गृहे निवसामि।

सैनिक—तर्हि श्रीमन्तः कवितामपि तन्वन्ति !!

के० के०—आम्, कदाचित्कुतूहलपरवशः।

सैनिक—किंविषयिणीं देव !

के० के०—को विषय, यस्यावसरः समापद्येत्, स एव विषय।

सैनिक—गुरो ! जगज्जालोद्विग्नं चेत. साहित्यचर्चाविस्तृतये प्लवे। यदि नास्ति भवतो वेलाविलम्ब, यदि चेम साहित्यसुधयाऽनुजिघृक्षन्ति, तर्हि पूरयन्तु ममाभिलाषम्।

के० के०—क्षत्रिय ! कः संसारविहारी एतस्माज्जगज्जालादुन्मुक्तोऽस्ति। मादृशा अप्यस्मिन्पाशे सुमृश बद्धा, परं साहित्यचर्या चरितुमोहास्ति चेद् ब्रूहि क विषयमधिकृत्य त्वां प्रसादयामः। त्वमस्माकमद्याभिनव. साहित्यातिथि.।

चैनिकः—गुरो! अयं यवनसेनाविह्वलस्य चापि सरला मनोमोहिनी सान्द्र-मन्दली रचना भवेत्।

के० के०—यतिष्ये। गद्यं रोचते उत पद्यम्?

चैनिकः—भगवन्! पद्यम्।

के० के०—श्रोतव्यं तत्। अद्यतनस्य समयस्य सन्ध्यावर्णनं भवतः पुरः पठामि—

सुखदशारदपौर्णिमचन्द्रमःसुविशदप्रभभास्वरविग्रहान्।
अवहदम्बरसुरक्तछवी नभो विपुलविभ्रममचिन्त्यगुणा गुणः (१)।

सुखं ददातीति सुखदो यः शरदि भवः शारदः "रूत्वम्" शारदः पौर्णिमचन्द्रस्तद्वत् सु-विशदप्रभः=उज्ज्वलकान्तिः, भास्वरस्य विग्रहो यस्याः सा तम् अवहदम्बरस्य इतो=रक्ताभां विभ्रमभृतम् अवहदनन्तो अचिन्त्यगुणा कमपि गुणः।

जिगमिषुर्दिशि पाशभृतः पर्यपहरन् कमलश्रियमीक्षितः
परिचितैरपि लज्जितमानसः समभवत् परिरक्तलिताकृतिः (२)।

पाशभृतः=वरुणस्य, दिशि=पश्चिमायां, जिगमिषुः=गन्तुमिच्छुः पतिः सूर्यः, परितो रक्ता यस्मै, सिता आकृतिरस्य स समभवत्। कमलानां श्रियं=शोभाम् अपहरन्, परिचितैः=लोकलोकैः ईक्षितः=दृष्टः, अतएव लज्जितमानस इव। परद्रव्यहरणं दृष्टः सर्वोऽपि लज्जते। अन्य सहलर्पंसिरसुभिन् दुरुक्तो कर्मणि प्रवृत्त इव नदलनात्परम्। लज्जितस्य मुखं रक्तं सितं च भवतीत्यनुभूतम्।

सकलवासरविभ्रमणातपव्यथितकाय इवोज्ज्वलितोऽग्निना।
जलनिधाविव मङ्क्तुमभीहते कमलजातविशोकिविभाकरः (३)।

कमलजातविशोकी यस्मात् विभाकरः=कमलकुलशोककारी एष सूर्यः। अग्निना दग्धस्थित इव वह्निदग्धः प्रकृतो नर इव, सकलवासरे=समस्तदिने, भ्रमणया आतपेन व्यथितकायः=दुःखितशरीर इव जलनिधौ समुद्रे मङ्क्तुं=स्नातुमभीहते इव।

श्रमणरोक्षितपापकदम्बकं गमयितुं नयितुं मुनिमानिनः।
गिरिगुहामुपविश्य वितप्सति सकुलबद्धितवार्धिमुपैति वा (४)

इनः=सूर्यः। अमगे वीक्षित=दृष्ट, पापकदम्बकम्=अनाचारसमूह, गमयितुं=नाशयितुं, मुनितां=मुनिभावं, नयितुं=प्राप्तुं, गिरिगुहाम्=अस्ताचलदरीम्, उपविश्य=आसनत्वेन परिकल्प्य तितप्सति=तप्तुमिच्छति।

स्वस्मात् (जात) कुल=स्वकुल=सूर्यवंशस्तेन वर्द्धितो यो वार्धिः=समुद्रः (षष्टिसहस्रसगरसुतादय मृगयमाणैरेव खनितः—इति पौराणिकाः) त वा उपेति।

उपतटोद्गतपादपमञ्जुले किसलयारुणिते नववञ्जुले
विशदवारिणि वार्धितटे शुचावयि। विधित्सति सान्ध्यविधिं रविः (५)

रवि, तटस्य समीप उद्गतैः=उत्पन्नैः पादपैः मञ्जुले=सुन्दरे। किसलयैर्नवपल्लवैररुणिते, नवाः=नूतनाः वञ्जुलाः=वेतसा यत्र, शुचौ=विशुद्धे जलदुर्गमत्वादितिभाव। विशद वारि यत्र तथाभूते वार्धितटे=समुद्रकूले, सान्ध्यविधिं विधातुं=कर्त्तुमिच्छति इव।

क्षितितले कमला भवता प्रिया युवकराजकवाञ्छितसुस्मिता।
इति निवेदयितुं जलशायिने त्वरितमस्तमगादिव भास्करः (६)

क्षितीति—"युवैव युवक, राज्ञां समूहो राजक "गोत्रोक्षे ति वुञ्" तेन वाञ्छित अभिलषित सुस्मित यस्याः सा भवता प्रिया=भवतां प्रियेव सुन्दरी कमला, क्षितितले मर्त्यलोकेऽस्ति—इति जलशायिने भगवते विष्णवे निवेदयितुं इव भास्करः=सूर्य, त्वरित यथा स्यात्तथा अस्तमगात्।

सैनिक०। शान्तिम्! केय कमला।

के० के०। कवयो हि नाम केवलकीर्त्तनपरा वस्तुनः सौन्दर्य्यमुद्गिरन्तो निर्दूषणा न दोषभाजोभवन्ति, अम्भोजनिरिवाम्भसः। कापि भवेत् कमला।

सैनिकः०। तदैव निस्तारः। अस्तु, प्रकृतमनुसरन्तु।

उपगतेऽपगतिं जगदक्षणि विपुलगर्वसदर्वविधूननात्
गगनसंसरणात्परिमार्जितं निपतितं पततीन्दुसमं रजः (७)

जगतोऽक्षणि=चराचरस्य नेत्रे भगवति सूर्ये, अवगति=अस्तं प्राप्ते, विपुलगर्वश्वासी सदर्वा=श्रेष्ठाश्वस्तस्य विधूननात्=कम्पनात् निपतितम्, इन्दुसम=कर्पूरतुल्यं रजः, गगनमेव ससरण=राजपथस्तस्मात् परिमार्जितं सत् पतति। श्रान्तोऽश्वः शरीरं विधूनयति।

उदरदर्पविनाशकृतश्रमाः शुककपोतमयूरपिकादयः।
कथयितुं दिनदृष्टमिवाद्भुतं विविशुरेत्य कुलायचयांस्तरून् ॥८॥

उदरस्य "नाहं केनापि पूरणीयो भवामि" इति यो महान् दर्पस्तस्य विनाशे=सङ्घातो कृतः श्रमो यैस्ते शुकादयः पक्षिणः, तरून्=स्वाश्रयान् वृक्षान् एत्य दिनदृष्टमद्भुतम्=आश्चर्यं परस्परं बालेभ्यो वा कथयितुमिव कुलायचयान् विविशुः।

अगरुतः शिशवोऽशनयान्विताः सकणचञ्चुपुटानथ वीक्ष्य तान्।
विदधते विरुतम्, नवपत्रिताः शकुनिभिर्विटपाः सुषमामिव ॥९॥

न गरुत् येषां तेऽगरुतः=अपक्षाः, अतएव शिशवः=बालाः पक्षिशावकाः। अशनया=बुभुक्षया, अन्विताः=युक्ताः, सकण=अन्नकणसहितं चञ्चुपुटं येषां ते, तान् पक्षिणः, वीक्ष्य दृष्ट्वा, विरुतं=कलरवं विदधते=कुर्वन्ति। अथ विटपाः शकुनिभिः=पक्षिभिः शुकादिभिः, नवपत्रिताः=सञ्जातनवपत्रा इव सुषमा=परमां शोभां धारयन्ति।

सैनिक.—साधु! पण्डित! साधु! वस्तुतः कविताकामिनीकान्तोऽप्यसि। कवीन्द्र! अनुभूतोऽस्येकस्मिन् विषये, पुनरिमां पूरयित्वा अनुगृहाण विलक्षणार्थां समस्यां "दिनकरे रजनीकरतां गते।"

के० के०—( क्षणं नभो विलोक्य ) शृणु—

प्रचलितेऽह्नि, तमोलिहि भास्करे कमलिनीवलनादिव संस्थिते।
मुखरितं विहितं विभिरावनं दिनकरे रजनीकरतां गते ॥१०॥

अह्नि=दिने प्रचलिते, तमोलिहि=तमोहन्तरि भास्करे=सूर्ये च, कमलिनीवलनात्=पद्मिनीसङ्कोचात् 'वल' संवरणे ल्युट्, संस्थिते इव=मृते इव लक्ष्यमाणे, अत एव दिनकरे सूर्ये, रजनीकरतां गते प्राप्ते, विभिः=पक्षिभिः, आ=समन्ताद्वनमावनं मुखरितं=

"तदेव देव! वयं कर्तुं कृतसङ्कल्पाः।"

* * *

पौलोमीपतिपत्तनोपवनपरिमलेनेव परिपूर्णस्य प्रासादस्य विद्युदावलिविलसिते सारस्वत-सातोदरैः सुधीवरैरुद्देशरत्नैराकुले रत्नाकर इव प्रेक्ष्यमाणे विशाले हाले[1] सुखमासीनानां सामयिकीमावश्यकतामनुभूय विचाराय समवेतानां विभिन्नमण्डलभूपालानामेका विचार-परिषत् प्रारब्धा। राष्ट्रस्य ज्यायान् विद्वान् ज्ञानस्य प्रतिनिधिर्निधिस्तपसः परिषत्पतिपद-मलञ्चकार। स्वस्तिवाचनानन्तरं समुत्सुकेषु तूष्णीम्भूय प्रतीक्षमाणेषु सर्वेषु चन्द्र आमन्त्रणस्य प्रयोजनं विशदयन्नुदतिष्ठत्। चन्द्रस्य विशालं शालोन्नतं सुघटितं विमलं वपुः, परिणतप्रावृषेण्यजलधरधामानः स्निग्धोज्ज्वला आकृतिं रम्यां काम्यां शोभां कुर्वन्तः स्कन्धविसर्पिणः प्रलम्बिताः कृष्णाः केशाः, मानस्य मर्यादेव तपस्विनः साधनेव मांसलोन्नता प्रलम्बा ग्रीवा, निर्मेघनीलाम्बरे सहसोदितस्य सूर्यस्य मण्डलमिव तेजस्वि मोहकमाधुर्यकमिन्दिरानन्दितं मुखमण्डलं सर्वेषु सम्भ्रमं सञ्चारयामास। स्मयमानः स प्रावोचत्—

आर्यता व्याप्तिरासीत्। अस्माकं वचस्ताम्रपत्रलेखायते स्म, पणश्च सूर्योदयवदप्रतिरुद्ध आसीत्। राष्ट्रान्तराणि यदा तमसावृतान्यनावृतानि विलेष शयानानि चासन्, अस्माकं राष्ट्रं जगद्गुरुर्धनबलकलाविवेकविज्ञानेष्वपास्ततुलमासीत्। अत्रैव विश्वस्य प्राचीनतमो ग्रन्थ ऋग्वेदः, अस्मादेव विश्वस्मिन् शान्तिलताप्रसारक दर्शनात्मक ज्ञानज्योतिरुदगात्। अस्मादेव आग्नेयपाशुपतवारुणवायव्यब्रह्मास्त्रप्रभृतीनां विश्वभयङ्कराणामस्त्राणामुद्गमः प्रशमश्च। ज्ञानज्योतिरीप्सया लोकान्तरीया अत्रैवाजिगमिषन्ति स्म। अत्रैव लोककल्याणैकमनसो मनस्विनस्तपस्विनो विविधा रीतिनीतीः प्रख्यापयामासुः। सर्वत्र प्रेम, वात्सल्यम्, सौहार्दम्, सहयोगिता, अभेदभावः, सद्भावः, सद्भावश्चासीत्। परमद्य ! भूमिः सूर्यश्चन्द्रो वायुराकाश तु त एव सन्ति परं मानवभावनाः परिवर्त्तिताः। अत एवैषा धरित्री ध्वस्तेव दृश्यते। हा! विलक्षणो दैवदुर्विपाकः। केन भावेनास्माकं पूर्वजा न्यवसन्, वयञ्च केन निवसामः।

पुरा सरसि मानसे विकचसारसालिस्खलत्-<br>
परागसुरभीकृते पयसि यस्य यातं वयः।<br>
स पल्वलजलेऽधुना मिलदनेकभेकाकुले<br>
मरालकुलनायकः कथय रे ! कथं वर्त्तताम्॥ पण्डितराजः।

प्रतिवेशिनि बुभुक्षिते दीने रुग्णे च भोजनं गर्हितमासीत्। कस्मिंश्चिद्नवीने ग्राममायाते सर्वं ग्रामीणास्तस्मै साहाय्यं प्रदाय स्वतुल्यमकुर्वन्। तस्मिन् दुःखितेऽवसन्ने न्यूनेऽवरे च ग्रामीणानामवरत्वं प्रतिष्ठितमासीत्। लाभार्थं सग्रहो हेय आसीत्।

यदधोऽधःक्षितौ वित्तं निचखान मितम्पचः।<br>
तदधो निलयं गन्तुं चक्रे पन्थानमग्रतः॥

क्रय्यपूर्णासु विपणिषु यथावश्यकं वस्तूपयोगाय विक्रीयते स्म। देशान्तरात् क्रेयमानीय विक्रयो जनस्यावश्यकतापूरणञ्च व्यापारिणः कर्त्तव्यम्, तदेव लाभो गण्यते स्म। अर्थार्जनयोर्द्देश्यं नासीत्। सर्वे ज्ञानधनार्जने परस्परं यथोचितेन सहयोगेन सौहार्दैकपरिवारव्यवस्थया निवसन्ति स्म। विदूरस्थमपरिचितं गृहमागतमीश्वरभावेनामन्यत गृही। ईदृशे वातावरणे क्व स्थानमधुना प्रतिपदं प्रतिदिनं स्थापितानां स्थाप्यमानानाञ्च भोजनालयानां

अगुणकणो गुणराशिर्द्वयमिह दैवात् खलानने पतितम् ।
प्रसरति तैलमिवैकः सलिले घृतमिव जडत्वमेत्यन्यः ॥

अवधार्यताम्, अस्माकं विशाले वाङ्मये कपाटावरोधिका केवलं शृङ्खलैवास्ति न तालकम्। तालकमविश्वासभीत्योः पुत्रवान्पुनयोरपत्यम्। सकलसौख्यसाधनस्याभेदभावस्याद्यात्पता भूता, तस्य स्वसिंहासने प्रतिष्ठापनमस्माकमुद्देश्यम्।

समाजे सर्वे समाना आसन्नर्थदृष्ट्या, परं केचन धूर्ताः स्वपक्षपोषणाय स्वार्थसंरक्षणाय शासकैरुत्साहिता आत्मोद्धरणभावमाश्रित्य प्रतियोगिताव्याघ्रीं निर्माय स्वस्थितिं दृढयित्वाऽग्रे गच्छन्तोऽनुगामिन आह्न्तुमारेभिरे कृतघ्नाः।

अज्ञातदेशकालाश्चपलमुखाः पङ्गवोऽपि सप्लुतयः।
नवविहगा इव मुग्धा भक्ष्यन्ते धूर्तमार्जारैः ॥ क्षेमेन्द्रः।

अनुगामिनश्च सकृदाहताः पतिताः परिस्थितिपीडिता जानन्तोऽपि तेषां दानवीभूतानां धौर्त्यं धाष्टर्यं च नोत्थातुमवशाः प्राभवन्।

उपेक्षते यः खलमाक्षिपन्तं साधुर्मनोऽवुध्यत कारणं तत्।
द्विजिह्वमेनं स यदेकजिह्वः प्रयुक्तिभिर्न क्रमते नियन्तुम् ॥ सोमेश्वर।

अपि तु परिस्थितिपतितास्तानेवाग्रगामिनो धूर्त्तान् पोषयामासुः। एते मत्कुणा मशका यूका इव मानवरक्तमाचूषयन्तः परजीविनो मानवशरीरं दुःखयन्तोऽपि मानवशरीरे स्थिताः।

एते हि कालपुरुषाः पृथुदण्डनिपातहतलोकाः।
गणनागणनपिशाचाश्चरन्ति भूर्जध्वजा लोके ॥
कस्तेषां विश्वासं यममहिषविषाणकोटिकुटिलानाम्।
व्रजति, न यस्य विपक्त' कण्ठे पाशः कृतान्तस्य ॥ क्षेमेन्द्र।

एतेषां शीर्षघातिनां प्रसह्यापसारणं जीवनाय किं न परमावश्यकम्? सद्योगो नियमनश्च समाजस्य जीवनभूतौ, तावच्च हन्त! मृतौ। वस्तुतो धनं लोकस्य न्यासः। परम्परया परिस्थित्या वा प्राप्तं धनं लोकस्य न्यासः। यथासम्भवं शीघ्रं यथारीति तस्य तदधिकारिषु प्रत्यावर्त्तनं प्रतिदानं न्यासधरस्य योग्यताया' सूचकम्। अतोऽद्य या सम्पत्ति

खलश्च खड्गश्च नहि स्वभावं जहाति कोशार्पणलालितोऽपि ।
यस्यातिमात्रं मलिनात्मकस्य परं द्विधा कुर्वत एव रागः ॥ सोमेश्वर ।

अस्यामेक एव सर्वग्राही बुभूक्षयातापितिव, परस्परं धनमपजिहीर्षति च । अस्याम वस्थायामाशङ्कापूर्णे वातावरणे क्व आनन्दः ? क्व सुखम् ? मन्यतां भवान् मूल्यमभिलषति, तस्मै किमपि भोजनवस्त्रादिकं प्रदाय तस्य श्रमेण स्वकार्यं चिकीर्षति, तदाऽवश्यमेव भवत्प्रतिवेशिना निर्धनेन भवितव्यम् । भवदैश्वर्यं भवत प्रतिवेशिनो दारिद्र्येऽवलम्बितम् । परम्, राष्ट्रे कश्चन भोजनवस्त्रादेरिच्छुको न भवेत्, सर्वैर्वा जीवनव्यापारः स्वेन चलेत्तदा मूल्यप्राप्तिरशक्यया । वपनम्, पशुचारणम्, भोजनम्, जलानयनम्, लेखन व्यवहारादिकं तैनैव कार्यम् । राष्ट्रं तद् यदि सम्पन्नं भवेत्, सर्वेऽयाचका अनभिलाषुकाश्च स्युस्तदा स्वर्णपते स्वर्णस्योपयोगिता पोतपाषाणखण्डतो नाधिका । तेन सञ्चितमन्नवस्त्रादि घुणादिजर्जरितमेव भविष्यति, यतो न कश्चना-काङ्क्षक । स स्वयञ्च नान्नम्, न वासांसि, न गृहाणि वा शतसहस्रगुणमुपयोक्तुमुपभोक्तुं वा समर्थः । अतस्तत् सर्वं विनङ्क्ष्यति । बुध्यतां तस्य सञ्ग्रहस्य कोऽर्थः । स्वल्पा यानन्दायापि तेन श्रमितव्यं कठिनं श्रमितव्यमेव । विशाले क्षेत्रे स स्वयमेकाकी न वप्तुं न लवितुम् न चोपयोक्तुं समर्थः, न च विशालस्य हर्म्यस्य जीर्णोद्धारे उपलेपे किमु वासेऽपि समर्थः । स जीर्णशीर्णानि गृहाणि स्वकीयानि कथयन्नेव हृष्यति । भविष्यति चान्यगृहनिर्माणेऽनुत्सुकः । अतः स लघीयसि गृहे उद्याने वा वसन् स्वहस्त कृतसर्वकार्य एवातिसन्तुष्टो भविष्यति ।

धनार्जने चतुरो धनमर्जयेत्, परं तस्योपयोगः सार्वदेशिको भवेत् यथा वायुराकाशं जलं विश्वजनीयानीश्वरप्रदत्तानि च तथैव धनम् । धनं लोकस्य न्यासः । विचार्यताम्, यदि माता शक्तिशालिनी चतुरा च, तदा किं सा दुर्बलस्य शिशोर्भोज्यं खादेत् ? यदि खादेत्तदा कस्तां मातरं कथयितुमीहेत । सर्वे तां डाकिनीं वदिष्यन्ति । परमत्र विश्व सर्वसाधनसम्पन्नः पितृस्थानीयो धनी गृहम्, मातापितरौ, दाम्पत्यञ्च विहायागताना पुत्रायमाणाना भृत्याना भृत्यकृपोपार्जितसम्पत्प्रतिष्ठो निर्दयं सर्वस्वं हर्तुं सक्षमः ।

अमृतं किरति हिमांशुः विषमेव फणी समुद्गिरति।
गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥

विचार्यतां श्रीमतां सम्मतौ स कथं सम्बोध्यः ?

आधुनिकं ज्ञान विज्ञानं केवल परिग्रहिणां धनार्जनस्य साधनमात्रम्, परेषामाकर्षणे शोषणे सहायकञ्च। अद्य विज्ञानाविष्कृतानि यन्त्राणि मानवमूल्यहराणि। प्रतीयते पुञ्जवादोऽद्य यन्त्रारूढो मानवजयी। यन्त्रं समाजेऽङ्गानां शक्तिवर्द्धनाय परिश्रमपरिहाराय कौशलेन समानवस्तूत्पादनाय अवकाशसंरक्षणाय च प्रतिष्ठितम्। चक्षुषोः शक्तिवर्द्धनायोपनेत्र दूरवीक्षण सूक्ष्मेक्षणञ्च, वाचः शक्त्यै ध्वनिविस्तारकम्, पादयोः शक्तिवर्द्धनाय द्विचक्रिका, मरुत्तरम्, वाष्पयानम्, वायुयानञ्च। हस्तयोः शक्तिवर्द्धनायासङ्ख्येयानि यन्त्राणि, लिपिश्रमपरिहाराय मुद्रणालयः। सोऽयं मानवविकासाय मानवाङ्गानां शक्त्युत्कर्षाय गुणोदयाय चोपयोगः सम्मतः। पर योऽवकाशः सर्वविधशक्तीनामुदयाय यन्त्रेण दत्तस्तस्मिन्नेकाधिकारः पुञ्जवादेन कृतः प्रतिद्वन्द्वितामुत्पाद्य। एवमल्पा अवकाशभोजिनोऽनल्पाश्चानवकाशयोजिनः संवृत्ताः।

सन्तापमोहकम्पान् सम्पादयितुं निहन्तुमपि जन्तून्।
सखि ! दुर्जनस्य हि मतिः प्रसरति दूरं ज्वरस्येव ॥ गोवर्द्धनाचार्यः।

अद्यतनं यन्त्रवैपुल्य मानवीयकलानां समाप्तिम्, प्रचुरमेकत्र सुलभं सौख्येण चोत्पाद्य धन केन्द्रितं करोति, कलाभिवृद्धिं बाधते, उत्पादने मानवस्पर्शं रुणद्धि च। मनुष्यस्य विश्वासस्त्वनेन पुञ्जवादप्रवर्तितेन पराहत एव सम्प्रति तद् विकासाधारं मनुष्यमेव जिघन्सति। जिघत्सां निराकृत्य तस्योपयोगिता केवलमस्माभिर्व्यवस्थाप्या।

न परं फलति हि किञ्चित् खल एवानर्थमावहति यावत्।
मारयति सपदि विषतरुराश्रयमाणं श्रमापनुदे ॥

यन्त्रोदयात् पूर्वमस्माभिर्वाहवः पशवः समाजे सम्मेलिता उपयोगितां नीताश्च, परमधुना पालितपरं गवाश्वमपि क्षुवति। अनुपयुज्यमानस्य रक्षाऽसम्भवाऽऽवश्येव। सर्वाभ्युदये सर्वेषामुदयः, पशूनामभ्युदयः=संस्कारोऽभिप्रेतः, किन्तु द्वितीयभागे। पर सर्वाभ्युदयीयाधिक्ययोजनेऽस्माकं चिरपरिचितानां पालितानां पशूनां संयोजनं तु नितरामावश्यकम्।

स्मर्यताम्, राष्ट्रे सर्वे समानाः शरीरेऽङ्गानीव। समये उप्त्वा पर्यवेक्षमाणो लविता कृषक, सन्धियोगनिपुणो नौनिर्माता, लोहकारः कुम्भकारश्चर्मकारो व्यवस्थापकश्चिकित्सकोऽध्यापक, गृहकारः, गृहकार्यदक्षा गृहिणी, स्वरान् संयोज्य गायन्ती गायिका, सैनिक, शोधको देशस्य सम्पादका मङ्गलकर्त्तारश्च। नैते कस्माच्चिदपि प्रजाव्यवस्थापकाद् राज्ञः, सदसद्विवेचयतो न्यायाधीशाद् वा न्यूनाः।

मम सम्मतौ राज्ञां धनिनाशायं विकासक्रमः।

पुरा ग्राम्या ग्राम्यं बलवन्तमूचुः—"वय तव जीविकां साधयिष्यामस्त्व ग्रामं रक्ष"। स स्वीकृत्य दण्डधरो नैपुण्येन ग्रामं ररक्ष। तस्य कार्यप्रणालीप्रसन्नाः पार्श्ववर्त्तिनोऽपि त ग्रामाणां रक्षार्थमनोदयन्। स स्वीकृत्य स्वाप्तपुरुषान्नियोज्य रक्षितुमारेभे। एवं शनैश्शनैः स बहूनां नगराणां रक्षको बभूव। "प्रजाहितव्रतिनो वयम्" इत्येव तस्यादर्श आसीत्। ग्रामरक्षकाणामावासाय परेषां प्रहाररोधाय प्रजानां सुरक्षायै तेनाधुना विशाल दुर्गं निरमायि। व्याघातकानां कृते तेनायुधनिर्मितिरारब्धा। रक्षकाणां शिक्षणाय स्वपुत्राणामध्यापनाय च वनादाहूय विद्वांसो नियोजिताः।

अध्यापयन्ति शास्त्राणि तृणीकुर्वन्ति पण्डितान्।
विस्मारयन्ति जातिं स्वां वराटाः पञ्चषाः करे॥

यातायातसुखाय ग्रामान्तरेषु लोकपथा निर्मिताः। वाहनानि सङ्गृहीतानि, अर्जितधनेन सेना च सङ्गृहीता। अधुना सोऽधिगतबलः पटुर्जनताया दौर्बल्यमनुभवन् काश्चित् स्वपक्षे कृत्वा स्वैरं करं ग्रहीतुमारब्धवान्। रक्षकोऽपि सोऽधुना भक्षको भवितुमारेभे। लोलुपः स इतररक्षकाणां रक्षाव्यवस्थां विशृङ्खलामकलाबोधोप्य इतरप्रदेशान् स्वायत्तीकुर्वन् प्रजाहितव्रतितां प्रासारयत्। स एव लगुडधरो राजपदेन स्वीकृतः, सर्वेषु विशेषणो राजतान्। सम्भाव्यते स एवाधुनिकलगुडिनां पूर्वजः।

लोकेन च मौर्दयात् सर्वा सत्ता ग्रामपालायितार राज्ञेऽर्पिता। त्वमस्माकं कल्याणमाचर, यदि वयं नेच्छामस्तर्हि दण्डयत्वस्माकं कल्याणमारभ, एवाऽनियन्त्रिता सत्ता राजोपाधिधारिणे ग्रामपालाय प्रदत्ता। राजा स्वयं साधारणो मानवः, न तस्मिन् काचिद् दिव्या सत्ता शक्तिश्च, या सत्ता शक्तिर्वा सा प्रजानामेव। एवं स लोकस्य सत्तया शक्त्या

च स्वार्थसंरक्षणाय लोकान् यथेच्छं दण्डयितुमारभत। अयनतो राजा निर्वाच्य आसीत्, यतो हि रक्षकस्य निर्वचन रक्षणयोग्यतानुसारि। परं शनैश्शनैः सम्प्राप्तसाधनोऽनुरक्तविविधविद्वज्जनः सोऽस्मत्पूर्वजो राज्यं कुलक्रमागतश्चकार। वस्तुतोऽस्य स्थितिर्द्वारपालतो नाधिका। ब्राह्मणैः क्षत्रबन्धुर्हि द्वारपालो निरूपितः। भागवते।

यथा चादिराजः पृथुः—

अहं दण्डधरो राजा प्रजानामिह योजितः।

रक्षिता वृत्तिदः स्वेषु सेतुषु स्थापिता पृथक्[1] ॥ भागवते ४।२१।२२

राज्ञां सृष्टिर्विप्लवपरिहाराय जाता।

रक्षार्थमस्य सर्वस्य राजानमसृजत् प्रभुः ॥ मनुः ३।६

प्रभवतीति प्रभुः = प्रकृष्टसत्ता ( सार्वभौमसत्ता ) सम्पन्नाः प्रजाः। 'विप्रलम्भो दुःखायाम्' ३।२।१८०

नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः। मनुः ७।१०२

दण्डो दमनादित्याहुस्तेनादान्तान् दमयेत्। गौतमस्मृतिः ११।

एतेन शासनान्यायव्यवस्थायाः पार्थक्येऽप्येतदेव कारणम्, यच्छासन द्वारपालायिताधीनम्, न्यायश्च विद्वदधीनः। त्यक्तासारा वने वसन्तो विपर्यस्तिनो विद्वांसोऽप्यधुनाऽरण्यकञ्च रुद्री गगनस्पर्शिसौधे च मोहिता दुर्ग्राकर वनवासमुत्सृज्य, अनात्पुरे हितादिपदलोलुपास्तत्स्वाभिषेकनाटकं चक्रिरे अनुमुमुदिरे च कुलक्रमागतकर्मापि दास्यम्, ऊचुश्च 'अष्टानां लोकपालानां वपुर्धारयते नृपः' इति। सत्यम्,

अपथं पदमर्पयन्ति हि श्रुतवन्तोऽपि रजोनिमीलिताः।

यात्रवल्क्यस्मृतौ ( अ. १।३०९,१० ) राज्ञां लक्षणं त्वेवमादि—

महोत्साहः स्थूललक्ष्यः कृतज्ञो वृद्धसेवकः।

विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः ॥

---

१ अहं पृथुः प्रजानां वृत्तिदः = वृत्तिं ददाति रक्षकत्वस्थानेन सः, तथाभूते राष्ट्रे प्रवृत्ततरो भवितुं यतन्ते। स्वेषु सेतुषु = मर्यादासु स्थापयिता दण्डधरो रक्षिता च प्रजाभिर्योजितः।

अदीर्घसूत्र स्मृतिमानक्षुद्रोऽपरुषस्तथा।

तस्य कर्म च—

स्वराष्ट्रे न्यायवृत्त स्याद् भृशदण्डश्च शत्रुषु।
सुहृत्स्वजिह्म स्निग्धेषु ब्राह्मणेषु क्षमान्वित ॥ मनु ७।३२

एव वृत्तस्य नृपते शिलोञ्छेनापि जीवत ।
विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥ मनु ७।३३

परमद्य स्वेष्वेव दोषेषु सर्वं आकृष्ट मग्नः। अस्तु, कुलक्रमागते स्वार्थरहिते पुत्रवादप्रभाविते कर्मण्यनुभवस्तु गरीयान्, परं पुत्रवादप्रभाविते तु दौर्गुण्यमेव। अतः शासकेनावश्यं परिवर्तनवता भवितव्यमेव। अन्यथाऽऽधुनिको राजेवाधिगत-राज्यास्त्रः सङ्गृहीतसैन्यो वर्द्धनबलः हृतदुर्गं आतङ्कितजगत् सेवकोऽपि स सेव्यो भविष्यति, नरपालश्चापि नरपतिः। परिस्थितिविशेषितः साधारणोऽप्यसाधारणः। परि-वर्त्तने दुर्बलमना उपभुक्तभोगः परिवर्त्तनेऽनीहः शासनादिलष्ट एव भविष्यति।

भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम्।
व्यवसायात्मिका बुद्धिः समाधौ[1] न विधीयते॥ गीता।

एवमेवोद्योगपतिरपि परिस्थितिपोषितः।

यथा च—अमुकग्रामादन्नमाहर वयं तुभ्यं भोजनं दास्यामः, इति ग्रामीणैर्नोदितः पटुसेवकः सार्थवाहः स बहूनामन्नाहरणेन बहुभोज्यमाप। उपभोगावशिष्टं तदेव विक्रीणानो विनिमयमानः शनैर्जातसङ्ग्रहो वैवधिकचरो यानं स्थानञ्च निनाय जनस्यावश्यकतानुसारि वस्तुजातं पार्श्ववर्तिभ्य एव क्रीत्वा यथेच्छमूल्येन पार्श्ववर्तिभ्य एव विक्रीतवान् यथेच्छमूल्येन।

सह वसतामप्यसतां जलरुहजलवद् भवत्यसंश्लेषः।
दूरेऽपि सतां वसतां प्रीतिः कुमुदेन्दुवद् भवति॥

शनैः सङ्गृहीतधनो बलीवर्दं क्रीत्वा शकटमायोज्य ग्रामान्तरेऽपि व्याप्रियमाणो मूलधन-मैधयत्। "लाभाल्लोभः प्रवर्द्धते"। एवं वणिज्वर[2] स धनित्वमभ्यगमत्। ततोऽल्पव्ययेन विलासभावना तस्योत्पन्ना। स ग्रीष्मातपे बलीवर्दं वाहयित्वा पथ्यान्नमप-मितमारोप्य स्वयं भुक्त्वा अर्जयित्वापि स्वसम्वर्द्धने प्रधानसहायकाय परिस्थितिविपन्नाय मूकाय बलीवर्दाय यथाकथञ्चिज्जीवनधारणयोग्यं कदन्नं भोज्यं प्रायच्छन्नेदमवाहरत्। सत्यम्।

ऊर्ध्वोदयोऽपि हि खलः प्रथमं स्वजनं नु नयति परितापम्।
उद्गच्छन् दवदहनो जन्मभुवं दारु निर्दहति।

१ समाधि = अन्तःकरणम्। २ वाणिज्याय ऋच्छति = गच्छति सः। "ऋ गतिप्रापणयोः।" 'बनजारा' इति लोके।

अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।

तस्य कर्म च—

स्वराष्ट्रे न्यायवृत्तः स्याद् भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ मनु० ७।३२

एवं वृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः ।
विस्तीर्यते यशो लोके तैलबिन्दुरिवाम्भसि ॥ मनु ७।३३

परमद्यास्मासु कति तथाभूताः सन्तीत्यात्मा निरीक्ष्य ।

कुलानि जातीः श्रेणीश्च गणाञ्जानपदांस्तथा ।
स्वधर्मचलितान् राजा विनीय स्थापयेत् पथि ॥ याज्ञवल्क्यः १।३६१

शनैश्शनैर्दुःशीलशासकसन्नस्तासु प्रजासु ज्ञानप्रसाराभावादातङ्केनैव राजानो भुव शासयामासु —

सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ॥ मनुः ७।२२
दण्डः शास्ति प्रजाः सर्वाः दण्ड एवाभिरक्षति ।
समीक्ष्य स धृतः सम्यक् सर्वा रञ्जयते प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वतः ॥ मनुः ७।१८-१६

इत्यादिगुणैर्लक्षणैः कर्तव्यैः परिहर्त्तव्यैर्व्यसनैश्च स सेवको भृत्य एव च प्रतीयते, नैव सेव्यमनुसरन्ति । राज्ञामेतानि व्यसनानि सर्वथा परिहार्याण्यासन्—

दश कामसमुत्थानि तथाष्टौ क्रोधजानि च ।
व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥ मनुः ७।४५
मृगयाक्षो दिवास्वप्नः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥ ७।४६
पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयार्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥ ७।४७

एषा पुञ्जवादस्याद्या भावना। अधुना सोऽनायासेनाल्पव्ययेन च नित्यमुपयुज्यमानाना वस्तूना निर्माणेच्छयाऽऽवश्यकताग्रस्तान्निर्धनांस्तन्तुवायांस्तक्षकाँल्लोहकारान् कुशलान् कारुश्चामन्दोदया दया कुर्वन्निव नियोज्य वस्तूनि निर्माप्य जीवनधारणयोग्य प्रयच्छन् प्रचुर धनमैधयत। वराकास्ते च परिस्थितिपीडिता कि कुर्युं, यतो हि "सर्वारम्भास्तण्डुलप्रस्थमूला।" सत्यमेव केनापि कविनोक्तम्।

इयमुदरदरी दुरन्तपूरा यदि न भवेदभिमानभङ्गभूमि।
कथमपि न सहे भवादृशाना कुटिलकटाक्षनिरीक्षण जनानाम्॥
कपति वपति लुनीते दोग्धि सोव्यति पुनाति वयते च।
विदधाति किं न कृत्यं जठरानलशान्तये तनुमान्॥

अथ च गो स्तनन्धयो वत्स प्रतिदिनमेकप्रस्थमित पय पिबन् प्रतिप्रस्थमाणकद्वय मूल्येन सवत्सरे पञ्चचत्वारिंशन्मुद्राणा केवल पय पास्यति, शष्पादिक पृथक सेवास्थानादिव्ययश्च पृथक। एकहायनस्य वत्सस्य मूल्यञ्च मुद्रापञ्चकम्। चत्वारिंशन्मुद्राणा हानिरिति विचार्य गौर्वत्स विना कथ दुग्ध दद्यादित्युपायमन्विष्य जातमात्रमेव वत्समेकया मुद्रया गोघातिभ्यो विनिमयते केवल स्वार्थपण्डित।

अतिमलिने कर्त्तव्ये भवति खलानामतीव निपुणा धी।
तिमिरे हि कौशिकाना रूपं प्रतिपद्यते दृष्टि॥ सुबन्धु।

पुञ्जवादे एतादृश्य कल्पना कस्य गम्यते विज्ञान वा। हन्त! "कृद्धिश्चित्तविकारिणी।" स्वमातुर्दुग्धपाने वत्सस्यैवैकाधिकारो रक्षिणस्तु पीतशेषे, नैव तस्य विचार। भगवती वसुधा पशूश्च, वत्सस्य पिता बलीवर्देन कृष्ट्वाऽधिगतमन्नम्, तृष्या जात शष्प मनसा स्वायत्तीकृत्य यथेच्छाचरणाय स्वतन्त्र ईश्वरमुपेक्ष्य, राष्ट्रहितम्, अप्रति कुर्वता परिस्थित्या मूकानां च हितमपश्यन् पराजितस्याहरणाय स्वार्थपोषणाय चेष्टते परिग्रही। एव परिस्थित्यर्जितधन स भौतिकीमुन्नतिमकरोत। परिस्थितिरेवास्य ऊर्ध्वं नयने परमा साधिका। यथा च कश्चन विप्र शिष्यगृह गत शिष्येण प्रोक्त "भवान्नास्मत्पक्वमत्ति नचास्मदानीत पय पिबति, अतो भवानेव पचतु जलमाहरतु च" इति स स्वस्मै कृतवान्।

। शिष्यस्य स्त्रियां रुग्णायां रजस्वलायां वा भूतायामितरजाति शिष्योऽवदन्

"गुरो! भवान् पश्यत्येव, आवाभ्यामपि पक्तुं दयताम्, तदर्थं मुद्रामेकां दास्यामि, यतो न विना मूल्यमावां गुरुपाचितं खादिष्यावः" इति शनैश्शनैश्चलित एष व्यवहारोऽद्य हन्त! ब्राह्मणान् पाचकान् प्रयास्यायिनश्च चकार। हन्त! दारुणा परिस्थितिः। परिस्थित्या चान्त्यजाश्शनैश्शनैः कृतवाणिज्यादय उच्च वर्गमुपेताः। अस्तु,

अथाधुयोगपतिरनवरतमधिकाधिक श्राम्यते परिस्थित्या प्रतिकर्तुमसमर्थाय श्रमिणे यथाकथञ्चिज्जीवनं धर्तुं किञ्चित् प्रक्षिप्य, कारयितासु कुटीषु परपयासु वाऽऽवासस्य सर्वस्वमपहरत्यज्ञातभावेन। एतच्छोषणं प्रकटितमथवा यस्याऽऽनन्दोपवनदावाग्नेर्वराकघस्मरस्य पुत्रशतस्य ज्येष्ठः पुनः। एतेषां लक्षाणां सहस्राणां वान्यतमः कश्चन कदाचन कश्चन यशोर्थी स्वार्थी किमपि ददाति चेत्तद्दानं नीवीं[1] प्रमोष्य शतमुद्रां निष्कास्य ताम्बूलवीटिकाप्रत्यर्पणवत्, [2]घन प्रचोर्य सूचिकादानवद्वाऽकिञ्चित्करम्।

अथ राजानः सामन्ता भूमिदारा धनिन उद्योगपतयो व्यापारिण इतरे च कृषकेषु जीवन्ति। सोऽयं सर्वोपजीव्य ईश्वरस्य लघुभ्रातेव लोकजीवनाय सर्वथा सक्षमोऽपि निर्धन एवास्ति। तस्य पशुपालनालपरिपद्धिभूषणाः शिखिशिखण्डकृतावतंसाः बालमुकुन्दसमाः शिशवः साधनविहीनाः खाद्याभावदुःखदारिद्र्यविकला उच्छ्वसन्तो मृत्युमुखं विशन्ति, विवेकसंस्काररहिता अशिक्षिता वा जीवनं यापयन्ति पशव इव। ते पयसः प्रधानस्रोतसोऽपि पयः पातुं न शक्नुवन्ति, नवनीतस्य निर्मातारोऽपि तन्नादन्ति, वस्त्रस्य धातारोऽपि नग्ना, अन्नस्यैकमात्र धातारोऽपि निरन्नाः। अन्य एव कश्चन हस्तस्तेषामज्ञानदरिद्राणां मुग्धानां हस्तादाच्छिद्यादाय तदुपभुङ्क्ते। हन्त! कृतघ्नानामस्माकं कथं निष्कृतिर्भविष्यति। "कृतघ्ने नास्ति निष्कृतिः।" तेषां परिस्थितौ ज्ञानविज्ञानयोरुपयोग उपभोगो वा विधास्यते इति वक्तुमशक्यम्। जठरज्वालालीवलयितानां तेषां द्राघीयो दरिद्रं जीवनं पादकन्दुकवत् केवलं जनानां प्रबलान् पादाघातान् सोढुमितस्ततो धावितुम्, रेणुषु स्नानाय तिरस्काराय च केवलम्, हन्त! "दारिद्र्यदोषो गुणराशिनाशी"।

कुलं शीलञ्च सत्यञ्च प्रज्ञा तेजो धृतिर्बलम्।
गौरवं प्रत्ययः स्नेहो दारिद्र्येण विनश्यति॥ चाणक्यः।

---

१ नीवी – अण्टी। २ घन – घन लोहकूटनेका।

मानो वा दर्पो वा विज्ञानं विभ्रमः सुबुद्धिर्वा ।
सर्वं प्रणश्यति समं वित्तहीनो यदा पुरुषः ॥ पद्मतन्त्रम् ।

पर ते तु धन्या एव येषां मृतानां लोकोपकारभावौतप्रोतान्यस्थीन्यपि गुर्वीमुर्वीमुद्धरयन्ति ।

पाटीर ! तव पटीयान् कः परिपाटीमिमामुरीकर्त्तुम् ।
यत् पिषतामपि नृणां तनोपि परिमलैः पुष्टिम् ॥ (पण्डितराजजगन्नाथ.)

ग्रामोन्नत्यै सर्वो व्याचष्टे, परमुन्नतिर्नगराणां भवति, वराका वचनैर्वञ्च्यन्ते । आजीविकासाधनान्यपि नगरेष्वेव सन्ति । स्वार्थ, पक्षपोषणम्, लोलुपत्वम्, क्रूरत्वम्, परिग्रहिणां नागरिकाणां प्रधान धर्मः । वराका ग्राम्या दुर्भिक्षविक्षिप्ताः गतधना जनाः सुवर्णसुभग मञ्जुलकुसुमसरससुगन्धगन्धवहोद्वासितामयकुल सुरविटपिवाटीपरिवृतचरम्, पुञ्जवादपुञ्जनपरिप्लुष्टं शरज्ज्योत्स्नाशुद्ध सौभाग्यजीवनजनन स्वास्थ्यहित महित वीतराग तपोवनमिव ग्राममुत्सृज्य स्वर्गान्नरकमिव मशकमत्कुणमक्षिकासंरक्षितासु दुर्गन्धनिधानासु रथ्यासु निवासाय बाध्यन्ते चरकमाहूयमाना यक्ष्मभक्षिता जीवन्तः परमश्रमेण सञ्चिन्वन्तस्तनीयांसं पांशुमपि न सञ्चिन्वन्ति, न च सञ्चेतुं शक्नुवन्ति । राज्याधिकारिणोऽपि नित्यनवप्रियाः चाकचक्यैकप्रवणचेतसः सासूयाः ग्रामेषु न यान्ति । यतो हि न तत्र विविधव्यञ्जनोपबृंहितानि द्विजटद्विजटस्फुरदिन्दीवरनिन्दिसुन्दरवदनामृतहास्यगीतोपेतानि शङ्कितलज्जितरसभरचञ्चलतापविमोचनमधुरहगन्तशोभितानि उदग्रसूच्यग्रकञ्चुकाञ्चितवक्षोविभूषितानि सघनोपनीतानि गोष्ठीभोज्यानि, न सौवर्णराजनभाजनेपूपहृतान्याहृताश्चाध्यमिनन्दनपत्राणि, न प्रच्छन्नच्छलैरुपहृतानि पुष्पफलाच्छादितानि दीनारपिटराणि, न सुवासितसुमनसां वासितवाससो दाराः, न निवासाय स्वर्गसुखदा आवासाः, न भ्रमणाय चक्षूंषि चमत्कुर्वन्तो मरुत्तराः, न च सभोपेतानां सहस्रशो मनुष्याणां चित्ताह्लादकः करतलध्वनिः । को नाम एव विषमाकर्षणमुत्सृज्य रूक्षशुष्केष्वसभ्याज्ञानदारिद्र्यपूर्णेषु साधनाधमेषु ग्रामेषु गन्तुमुत्सहेत ?

पुञ्जवादे मनुष्यो धनसङ्ग्रहस्य यन्त्रम् । केन व्यापारेण कया प्रणाल्याऽधिकाधिक धन मे प्रभवेदित्येव तस्योद्देश्यम् । नात्र मनुष्यस्य मूल्यम् । प्रतिदिनं यन्त्रेषु जीवनरत्नं जहतां जनानां क्वापि मूल्यं निरीक्षितम् ? लौकिकः सूर्या भमायां शोचति किमु ?

येनामन्दमरन्दे दलदरविन्दे दिनान्यनायिषत ।
कुटजे खलु तेने हा ! तेनेहा मधुकरेण कथम् ॥ जगन्नाथः ।

अथ प्रतिशतमेकस्यानर्जितसम्पत्तावधिकारः। व्यापारिपरिग्रहिणौ सगुणौ सधर्मौ परस्पर पोषकौ। एषां मुष्टिमेयमानवानां रक्षायै व्यवस्थायै ये स्वायत्तीकृतपरसम्पदो रक्षणमभिलषन्ति सर्वे क्लिश्यते। एतादृशे वातावरणे कार्यमकुर्वन् धनार्जकश्चौरायित प्रसह्याहरको लुण्ठको वा चतुरो गण्यते, हन्त! दृश्यतां पुञ्जवादे मापदण्डश्चातुर्यस्य। इतश्च रात्रिन्दिवं कार्यं कुर्वन् 'कृत्ता'[1] इत्युच्यमानोऽपि न फलभाक्। अत्र प्रतिशत नवनवतेश्चार्जितसम्पत्ता वेव नाधिकार, कथनाज्ञातहस्त एव तामपहरति। परस्य चानर्जितसम्पत्तौ पराश्रमाधि गतसम्पत्तौ पूर्णाधिकार।

एकत समानेऽपरिश्राम्यतामिन्द्रियाणि व्यर्थतामुपयन्त्यनुपयुज्यमानानि, इतश्चेत रेषामत्युपयोगेन। एतादृशे समाने प्रतिशत नवनवतिर्मनुष्याणां, कठोरश्रमाय बाध्यते, एकश्चानुत्पादकोऽश्राम्यन्ननारत विश्रमाय विषयोपभोगाय सरक्ष्यते। सोऽनीक्षितक्लेशोऽसोढश्रम सर्वेषां श्रमसश्रम बुद्धिमतां बुद्धिश्च क्रीत्वा परैधितो[2] धनेनात्मानप्यतिवर्तते, परं तस्य वास्तविकी स्थिति 'भ्रेय्यतोऽधिका नासीत्। परमद्य स पराश्कन्दी[4]।

विपयरतोऽप्यतिविषम खल इति न मृषा वदन्ति विद्वांस ।
यदय नकुलद्वेषी सकुलद्वेषी सदा कृपण ॥ सुबन्धु ।

स्वामिनोऽज्ञातभावेन हृत द्रव्य चौर्यम्। यथा च कृषकेण श्रमेण तूलमुत्पाद्य प्रतिमुद्र चतुष्प्रस्थ विक्रीतम्। तन्निर्मितानि द्वादश धौतवासासि तेन षट्त्रिंशन्मुद्राभि क्रीतानि। विहङ्गमावलोकनेनास्त्वेका मुद्रा तूलस्य, पञ्च कर्मकराणाम्, पञ्च शासनस्य पञ्च प्रबन्धस्य च, पर विंशतिर्मुद्रा एतादृशेनाज्ञातेन हस्तेनोद्भुक्ता येन न क्षेत्रमवलोकितम्, न निर्माणशालाश्रमोऽनुभूत, नचालेखन कृतम्। एतच्चौर्यम्। किन्त्वेतच्चौर्यं व्यापारिकम्, सुसङ्घटितम्, समाजानुमोदितञ्च। आधुनिकसमाजस्य परिभाषया न स चौर, अपि तु उद्योगपति, जीवजगतो जीवातु।

---

१ वर्कर worker २ पैरासाइट Parasite ३ बैरा Bearer ४ परान् स्कन्तु - शोषयितु शीलमस्य 'स्कन्दिर् गतिशोषणयो' ताच्छील्ये णिनि।

येषां प्राणिवधः क्रीडा नर्म मर्मच्छिदो गिरः ।
कार्यं परोपतापित्वं ते मृत्योरपि मृत्यवः ॥

परमवधार्यताम्, नैतत् प्रबुद्धे भारते चलिष्यति । वयमेतदन्याय्यमसहन्तुं समवेताः । कस्यापि दुरवस्थया कोऽपि व्यथान्वितो न भवेत् । व्यतिक्रमविनाशोऽस्माकमुद्देश्यम् ।

परितो भोगाढ्यां सौवर्णीं लङ्कां यत्र तत्र मुनीनां कङ्कालकूटं रामेण प्रेक्षितम् । तपोधनाः शान्तात्मानः पठनपाठने यजनयाजने ज्ञानविज्ञानविस्फुरणे प्रयतमाना लोकोन्नत्यै विश्वस्य भूत्यै श्राम्यन्तः परोपकारपरायणा मुनयो राक्षसैर्भक्षिताः, जनस्थानमपि तदरण्यतां यत्र, मुनिभूमिरपि सा मृत्युनिकेताभूदिति वाल्मीकिरेव ते । परम्, किं सम्भाव्यते यदेतदन्नं रक्षोभिर्ग्रासितमभूत् ? नहि नहि, अपि तु तेषां निशाचर्या[1] नीतिः । धनेशस्य लघुभ्राता धनलुब्धेन रावणेन शोषिताः शान्ताः शान्तिप्रियाः सविनया मुनयः सम्पीडिताः बहुदुःखा जाताः, शिरास्थिशेषा अवसन्ना दीना नृपेभ्यः करमपि पिण्डमपि दातुं न प्राभवन् । नैते साधनसम्पन्ना दिव्यसिद्धय ऋषयस्तेषां वाचामसामर्थ्यादक्षमत्वात् । अपि तपःस्वच्छनष्टदोषाः प्रजा एव मुनित्वेन वर्णिताः सुशीलत्वात् साधुवृत्तत्वात् । रक्षोराजो रावणो दशग्रीवो द्विदशकरश्च वर्णितः । परं किं सम्भाव्यते यत् कश्चन द्विपाद् दशग्रीवो द्विदशकरश्च भवितुं शक्नोति ? वस्तुतस्तस्य कर्मणः प्रतीकौ पादौ द्वावेवास्ताम्, परं चरमादातुं शासकस्य दुर्मददुर्वृत्तगुणैरुपेतः स विंशतिकरः, दशेन्द्रियविषयानुपभोक्तुं च दशानन आसीत् । अनया सर्वग्रहणलोलुपया शोषणप्रणाल्या तु तापयन्, मथ्नन्, पीडयन्, सुन्दरीराहरन् त्रैलोक्यं रावयामास, अतो रावणनाम्ना प्रसिद्धः । तस्य भ्राता मद्यमांसमहिलाभिरुन्मत्तो लोकव्यवहारविरक्तो न कस्मादपि किमपि शुश्रूषुर्महानिद्रः कुम्भकर्णः[2] इति, परश्च लोकभीषणो विभीषण इति विश्रुतः । जनस्थाने चास्य दुर्वृत्तौ मुख्यौ शासकावास्तां खरो दूषणश्च, इमौ गुणावपि सविग्रहाविव पुरुषवद् वर्णितौ प्राचुर्यात् प्राबल्याच्च । वस्तुतः खरः शासनकाठोर्यम्, दूषणश्च सकलदोषप्रभवत्वम्, जनस्थाने एकयोरेव साम्राज्यमासीदत एव जनस्थानमरण्यतां बभार ।

एवमुदितमनसे रुष्टे दशपाद्–दशेन्द्रियाणि रथा इव (नियतानि वशीकृतानि येन) दशरथ

---

१ निशायाम्–अन्धकारे अज्ञानान्धकारे च चरन्ति–प्रसरन्ति ते निशाचराः स्वेच्छमार्गस्थाः । २ कुम्भे कर्णनाय किमपि फलं लब्धुं यत्नम्, तदेव तत्र ।

कौशल्यायाम्—कुशलकर्मोपेतायां राम प्रसूत । स्वकर्मक्षमसर्वेन्द्रिय एव युक्ततम पुमांसमुत्पादयितु प्रभु । तेन सर्वलोकहितैषिणा त्रैलोक्यरमणाद् राम इत्युपाधिं दधता सर्वा मर्यादा प्रतिष्ठापिता । रमयति विश्व स राम, तस्य स्त्री सीता कृषिप्रतीका राष्ट्रस्याजीविका जनकस्य—उत्पादकस्य पुत्री । एव स त्रैलोक्यरमण सीतां परिणीय स-लक्षण लक्ष्मणम्, विश्वभरणप्रवण विषयानासक्त विरक्त ज्येष्ठानुशासनेऽनुरक्त भरतम्, मर्यादाशत्रूणां हनने शत्रुघ्नञ्च भ्रातृत्वे प्रकल्प्य "साधुतपस्विकण्टक विरावण रावणमुग्रपौरुषम्" निहत्य सर्वत्रानन्द प्रसारयामास । अत एव तस्य पुरी अयोध्या—न केनापि योद्धु योग्या शक्या वाऽऽसीत् । तस्य राज्यमद्युनापि स्मयते । यत्र प्रहृष्टमुदितो लोको हृष्ट पुष्ट सुधार्मिक । निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जित ।। विविधरूपेण भावुकास्त गायन्त्युपश्लोकयन्ति च । यतस्तस्य जीवनं न स्वस्मै, अपि तु लोकरञ्जनाय । एषैव स्थितिर्हिरण्यकशिपो । हिरण्यस्य कशिपु —पर्यङ्को यस्य, यत्र जना जलाय त्रस्तास्तत्र स पर्यङ्कमपि हिरण्मय मकारयत्, एतादृशो दुर्वृत्तो भोगाभिलाषी च, य स्वपुत्रायितान् प्रह्लादमानान्[२] जनान् निष्पीड्य स्वैर विचचारोपेक्षितेश्वरान्तर ईश्वरमानी निरङ्कुश प्रचुरैश्वर्ये । तदा कश्चन नरसिंह एवाज्ञातागमनस्त क्षपयामास । प्रह्लाद इत्यव्यक्त शब्दायमानस्य दु खितसमाजस्योपलक्षणम् ।

एत एव राक्षसा पुरा रक्षका आसन्, आसीच्च तदा सम्मानबोधिका राक्षसपदवी, पर तेषा नृशसव्यवहारेण नैशाचर्या नीत्या च साम्प्रतमधोगति गता महत्तरहरिजनशब्दवत् । एते निशाचरा सामान्यसाधुजनानां शोषणादेव लङ्का सौवर्णी कशिपू श्च हिरण्मयान् कर्तु प्राभवन् । अस्माक सद्भावनारते विरतविद्वेषे सत्कृतिसम्पन्ने शान्तसन्तुष्टजने राष्ट्रेऽभितो दिक्षु दृश्यमानान् प्रासादान् परित कङ्कालकूट ततोऽप्यधिकमैक्षिष्यत यद्यस्मान्नान्यत्रोपयोगो नाभविष्यत् । एकस्यां सौवर्ण्यां लङ्कायां शोषक भोगाभिलाषिण शासक समुच्छेत्तु मर्यादां प्रतिष्ठापयिषू रामोऽवातरत्, परमधुना परित प्रेक्ष्यमाणासु सौवर्णीषु लङ्कायितासु सर्वत सरता रावणायमानानां हिरण्यकशिपूयमानानां स्वानाञ्च कृते मर्यादा प्रतिष्ठापयिषद्भिर्भवद्भिरेव रामरूपेण नरसिंहरूपेण च भवितव्यम् । यतो हि

१ रक्षतीति राक्षस, रक्ष पालने असुन्नन्तात्प्रज्ञाद्यण् । अधुना तु रक्षत्यस्मात् ।
२ अव्यक्त शब्दायमानान् । ह्लाद अव्यक्ते शब्दे । गुर्राते हुए ।

यस्मिन् यथा वर्त्तते यो मनुष्यस्तस्मिंस्तथा वर्त्तितव्यं स धर्मः ।
मायाचारो मायया वारणीयः साध्वाचारः साधुना प्रत्युपेयः ॥

नूनं नानामदोन्नद्धाः शान्ति नेच्छन्त्यसाधवः ।
तेषां हि प्रशमो दण्डः पशूनां लगुडो यथा ॥ भागवते १०।६८।३१

नैतत् सम्भाव्यते यदेते बोधनेन सत्पथे समागमिष्यन्ति ।

भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ।

परमेते भ्रान्ताः समाजेनोपेक्ष्यमाणाः सम्भ्रान्ताः । भ्रान्तानामभ्युदयो दयापात्राणां सत्पुरुषैरेष्टव्य एव । यतः—

रुद्रोऽद्रिं जलधिं हरिर्द्विविपदो दूरे विहायाश्रिताः
भोगीन्द्राः प्रबला अपि प्रथमतः पातालमूले स्थिताः ।
लीना पद्मवने सरोजनिलया मन्येऽर्थिसार्थाद्भिया,
दीनोद्धारपरायणाः कलियुगे सत्पूरुषाः केवलम् ॥

जिह्वायां दन्तैर्दष्टायां न कोऽपि कुप्यत्यभेदात् । एतेऽप्यस्मद्वर्णमदाविष्टाः । एष मद एषामपनेयो येनाप्रकृतिलीनवस्थां विहाय प्राकृतिकीं दशां भजेयुः । "असतः श्रीमदान्धस्य दारिद्र्यं परमाञ्जनम्" । भागवते १०।१०।१३ । एष उत्सुकोऽवसरः । समुद्रादुद्धृत्य देवेषु गतायां श्रियां या स्थितिर्दैत्यानामासीत् सैवाद्या-स्माकं धनिनाम् । "अन्तरापाति हि श्रेयः कार्यसम्पत्तिसूचकम् ।"

भेदभावनायां परकीयभावनायां तीव्रायां विपन्नता, तस्याल्पायामल्पतराया-मल्पतमायाञ्च क्रमशः सम्पन्नता । सर्वेभ्यः समाना प्राप्तिरभेदभावस्य पक्व-तायामद्वैतभावस्याभिवृद्धावेव भवति, स एवास्माकं साध्यः, विरोधपरिहारः, सर्वत्र समत्वापादनम्, कर्त्तव्यबुद्ध्या प्रदर्शनरहितं सहजं कर्म च । किन्तु सेवकानां माता किं तत्तन्मु विवरणं प्रकाशयति ? माता सेवाया आदर्शः । नमोभूय पुरा समुदीयमानः किमुदीयते ? अहं तानोऽपदर्शयिष्यामि, पश्चिमः प्रेरयिष्यामि, लोकान् कर्मणि योजयिष्यामि परमेतत्तस्य सत्तया स्वतो भवत्येव । परमिदं प्रसरत्, विविधरूपैः

किमेतदेव पुण्यम्? एष एव धर्मः? पुण्यानुष्ठायिनामेतदेव लक्ष्म? अर्जिततपसामधिगततपःफलानां तापसानामेष एव भावः?

भुज्यन्ते स्वगृहस्थितैरिव सुखं यस्यार्थिभिः सम्पदः
पट्वी यस्य मतिः तम.प्रहृतये द्वावेव तौ प्राणितः।
यस्त्वात्मम्भरिरुन्नतेऽपि विभवे हीनश्च विद्वत्तया
तस्यालेख्यमणेरिवाकृतिधृतः सत्ताप्यसत्ता ननु॥

स्वामिने सम्पत्कूट चिन्वतामनपराधिनां भृत्यानामपि धनजिघृक्षयाऽपराधमुद्घोष्य धनमादाय भविष्यद्बाधानिरोधाय तान् कारायां निरोधयत्सु क्वाथ दया, क्व क्षमा, क्व धर्मः, क्वौदार्यम्, क्व दाक्षिण्यम्, क्व च लज्जा?

परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः।
सद्वृत्तवृत्तिहरणे बाहुसहस्रार्जुनो नीचः॥

धार्मिकम्मन्यानां ग्रन्थेषु, यांस्ते परमात्मकृतान् कथयन्ति, द्रव्यं सर्वसङ्कटानां पदम्, अपद पुण्यस्य, निषिद्धमग्राह्यमुक्तम्। द्रव्यवतामहमप्राप्य इति भगवानाह। "यस्याहमनुगृह्णामि हरिष्ये तद्धन शनैः"। सङ्ग्रह ईश्वरोपासनायाः सर्वथा प्रतिकूलः।

ऐश्वर्यं विपदां बीजं प्रच्छन्नं ज्ञानवारणम्।
मुक्तिमार्गार्गलं दार्ढ्यं हरिभक्तिव्यपायकम्॥

ब्रह्मवैवर्तपुराण प्र० ख० ३६।४८

परं तदपि धार्मिकम्मन्याः समाजेनोच्यमाना ईश्वरप्रियाः देवानां प्रियाः परोन्नतिप्रद्वेन धर्मानुत्सृज्य अन्यायेन धनमर्जयन्ति। विशाला दुर्गाश्रिताः प्रासादाः, अधिलक्ष्यजनरोधीनि च यन्त्राणि सन्तोषस्य चरमनिवानसरतं विदधति सर्वतः घोद्घोषमवलोकयन्ते, मत्स्यानिवस्तम्भाय रक्षार्थां कुक्कुराणामिव सम्प्रदर्पस्त्वाम्रखण्डाय सकर्णस्फोटं धयवे। पारस्परिकव्यवहारे स्वल्पमात्रयापि यदि स्नेहसहानुभूत्यौ व्यवाहरिष्येताम्, तदा विकसिताभ्यन्तरच्छिन्नपेक्षितं हृदयं कार्यक्षमताय प्रदर्शयितुं धर्मकोऽवश्यत्, तत्सर्पर्धापि नामविम्पत्, परम्, क्व प्रबलया भोगलिप्सया कठोरात्माचारैर्वानुकम्पनामिव तल्लयीत-सपनोऽपनैरेवं व्यवहर्तं सज्जः? विघटनप्रिया निष्ठुरा भ्रान्ताः सङ्कीर्णविचाराः

स्वार्थान्धाः स्वामिनो दासतामापन्ना लोभनाः कृतान्तस्य दूता इव प्रतनुवंशोद्भवदर्पगर्वा बर्बरा विनाशोन्मुखाः श्रमिके सहानर्थं दुर्व्यवहरन्ति ।

परक्षतक्षोदविनोदलीलाः खलाश्च काकाश्च यदृच्छयैव ।
पात्रेऽप्यपात्रेऽपि विगर्हणीयां वाचं च विष्ठां च समुत्सृजन्ति ॥

सोमेश्वरदेवः ।

आः । कष्टम् । धुवे ॥

एकः स एव जीवति हृदयविहीनोऽपि सहृदयो राहुः ।
यो निखिललघिमकारणमुदरं न बिभर्ति दुष्पूरम् ॥

पदाहतं रजोऽपि मूर्धानमधिरोहति, तदा कथं न स्याच्चेतने दुर्निवारव्यथे समुत्पीडिते मानवे मन्युः ? अस्तु, चरित्रमेतेषां श्रवणमिलनविज्ञानां पोट्टल्या सह समवेतानां घटकानां[1] वर्णनेनानुमातुं शक्यते, यत्रार्थता पतितमुररीकृत्य पतनम्, वर्णाश्रमाचारोऽनाचरितमिश्रः क्षारधिम्, भारतीसता यवनाक् सत्येन सह रसातलं प्रविविक्षति । नय नश्यते, दया दूयते, मानो म्रियते, मौनं चोत्क्रुश्यते, आर्जवं मर्ज्यते, ब्रह्मचर्यं जिह्रेति, माया रोदिति, द्यौः प्रक्षिपति, पृथ्वी प्रेङ्खति, पापं प्राचर्टति, पावित्र्यमुपेधते, सूत्रं क्षोपति, कष्टं कष्टायते, मनीषा शेते, यशः स्वं जुगुरति । कन्यायै याचते म्रियमाणाय वा बुभुक्षिताय दिवसम्, सम्पत्तिप्रचाराय ज्ञानविज्ञानयोरौन्नत्यै च प्रार्थितः सर्वदा सम्प्राप्तार्थहानिः, परं स्वर्णकोटाय सर्वस्वं त्यक्तुं सर्वदा सज्जः । प्राग्भवलक्षितशतशो यस्य विविधं यान्त्रायुधानां धुरन्धराघ्नान्तश्चराः प्रादुर्भावं चरन्ति । यत्र तत्र वैज्ञानिकमहदस्त्रागारस्य कलानिकेतनस्य सत्कलापरिषदो मनोरञ्जनशालाया नैशभोजनशालायाश्च निर्माणाभिनवप्रकाराणि व्यभिचारगृहाणि सन्नेपथ्ये, यत्र स्वैरवाहवदनमदस्विन्नेन्दीवरमदाः कृष्णपक्षमलक्ष्मो नृत्यावलिलोलनधोज्ज्वलचतुरनितम्बा मृदुस्तनोरसकम्बाहुलीकस्तनीरलनमुखो नखोद्यूतोत्थविहसितशकोत्पलाः स्मिताचनवज्योत्स्ना गतवहत्हृदयाः कलपुष्टालकेशोत्कारस्फुरन्मनिर्ह्रियुगितानाः खञ्जरीटनयनाः सालस्वेदोद्गतमर्मा मल्लिकाद्युतमालन्दपो विद्युल्लताकन्दलीभास्वराः कलधौतकलेवरा अर्वाङ्निर्घृतयौवना भुवनाभाः पारस्परार्थभूतलस्थाः श्यामोदरः सुकुमार्यः

1 दलाल ।

कुमार्यो जोषमधुस्तु तिलपितकपोलवक्षसो जीवनं कदर्थयन्ति । यत्र काशशीतांशुसंकाश-केशाः कर्पूरस्फटिकेन्दुसुन्दरावदाताभ्रुव प्रवचनधना धनोद्दामधामानोऽहीनभोगा महीन-भोगाखर्वचेतसो वर्षीयांसो धनिनो मकरन्दस्यन्दिनीं मधुरस्वरलहरीमाकर्णयितुकामाः कुमारीकीर्त्तिकौमुदीकलङ्कनकल्मषकलुषितकलेवराः काककामुकाः प्रकाम प्रेक्ष्यन्ते ।

अनर्थार्गताम्, एतदपहृत्यमेकदा राष्ट्रस्य विनाशाय समर्थम् ।

प्रात समधिगतधन सायं निर्धनः स्वपिति मन्दभाग्य । स किं प्रात पुण्यकर्मा सायञ्च प्रनष्टपुण्य ? पुनरपरस्मिन्नहनि चाधिगतपुण्यफल ? वस्तुतो यावन्ति चञ्चलानि तावन्तो मुद्राः । शतचञ्चलश्शतपति, सहस्रचञ्चल सहस्रपति, लक्षचञ्चलो लक्षपति, कोटिचञ्चल कोटिपति, तदूर्ध्वं तु चञ्चलात्मक । पतित्व हि स्वाधीनवस्तुन एव सम्भवति, धनं हि स्वाधीन न द्रव्यम्, तस्य गमनशीलत्वात् । अत कोटिपतिशब्देन कोटिचञ्चलतिबौद्धव्य । 'शाकपार्थिवादित्वात्समास' ।

कुमार्यो ज्योमभ्रूस्तिस्नपितकपोलवक्षसो जीवनं कदर्थयन्ति । यत्र काशशीतांशुसंकाश-केशाः कर्पूरस्फटिकेन्दुसुन्दरावदातभ्रुवः प्रवचनधना धनोद्दामधामानोऽहीनभोगा महीन-भोगास्तर्पचेतसो वर्षीयांसो धनिनो मकरन्दस्यन्दिनीं मधुरस्वरलहरीमाकर्णयितुकामाः कुमारीकीर्त्तिकौमुदीकलङ्कनकल्मषकलुषितकलेवराः काककामुकाः प्रकामं प्रेक्ष्यन्ते ।

अवधार्यताम्, एतदपकृत्यमेकदा राष्ट्रस्य विनाशाय समर्थम् ।

प्रातः समधिगतधनः सायं निर्धनः स्वपिति मन्दभाग्यः । स किं प्रातः पुण्यकर्मा सायञ्च प्रनष्टपुण्यः ? पुनरपरस्मिन्नहे चाधिगतपुण्यफलः ? वस्तुतो यावन्ति च्छलानि तावत्यो मुद्राः । शतच्छलश्शतपतिः, सहस्रच्छलः सहस्रपतिः, लक्षच्छलो लक्षपतिः, कोटिच्छलः कोटिपतिः, तदूर्ध्वं तु च्छलात्मकः । पतित्वं हि स्वाधीनवस्तुन एव सम्भवति, छलं हि स्वाधीनं न द्रव्यम्, तस्य गमनशीलत्वात् । अतः कोटिपतिशब्देन कोटिच्छलपतिर्बोद्धव्यः । 'शाकपार्थिवादित्वात्समासः' ।

कूटकलाशतशिबिरैर्जनधनविवरैः क्षयक्षपातिमिरैः ।
दिविरैरेव समस्ता ग्रस्ता जनता न कालेन ॥ क्षेमेन्द्रः ।

नाद्यैवां सम्मानवाचकत्वं राक्षसशब्दवत् । राक्षसा एव स्तुतिप्रियाः[1] ।

यन्नोपकारकं यन्न भूषणं यत् प्रकोपमातनुते ।
गुरुणापि तेन कार्यं पदेन किं श्लीपदेनेव ॥ गोवर्धनाचार्यः ।

वस्तुत एतान् संस्कृतिविनाशकानां साधुसद्वृत्तपरिस्थितिपीडितमुनिजनायितानां रक्तपिपासूनां स्वार्थान्धानां देवद्विजदरिद्रापाङ्गविधवावराकलुण्टाकानां पर्यायान् उद्बुद्धा मन्वते, परिस्थितिपीडिता नापि वक्तुं शक्नुयुः । परिस्थितिपीडितेन केनापि सत्यमेवोक्तम्—

---

1 दोष्यतिर्देशार्थं, दशैव चामरे देवभेदाः । क्रमशश्चार्थोपलब्धिः । देवः = क्रीडा-प्रियः । विद्याधरः = विजिगीषुभावापन्नः । अप्सरा = व्यवहारवित्तः । यक्षः = द्युति-प्रियः । रक्षः = स्तुतिप्रियम् । गन्धर्वः = मोदी । किन्नरः = मदासक्तः । पिशाचः = स्वप्नाभिलापी, स्वप्न इत्यज्ञानोपलक्षणम् । गुह्यकः = कामी । सिद्धः = अव्याहतगतिः । वैकल्पिकः प्रायशः सर्वगुणोपेतः ।

मानः कस्य न वल्लभः ? परमुखप्रेक्षित्वदुःस्था स्थितिः
कस्य प्रीतिकरी ? त्रपाभरनतं कस्मै शिरो रोचते ?
किन्तु स्वामिनि सावलेपहृदये दासीकृताः शत्रुभिः
क्षुद्रानद्यधनेश्वरान् धनमदक्षीबान् निषेवामहे ॥

वस्तुतो ये सु=सुखं रान्ति=ददति ते सुरास्तद्भिन्ना असुराः।

अद्यतन धर्मसंयोगात् केवलम्, काष्ठवाल्कवत्, घुणाक्षरवच्च। नतत्पुण्यस्य फलम्। अथ च पुण्येनैतदेव लभ्यते, कृच्छ्रतपसश्चैतदेव फलं चेत्, नियमयमदमादिभिरेतदेव प्राप्यते चेद् दावाग्नौ दहत्वेतत्तपः पुण्यञ्च, भस्म चास्य रसातले तथा निखातं भवेद् यथा प्रलयान्तेऽपि नोपर्युपेयात्। विद्याधनम्, पशुधनम्, कृषिधनम्, कलाधनं पुरा धनपदवाच्यमासीत्, परमहो! अद्य विनिमयसाधनानि मुद्रितानि कर्गदखण्डानि धनपदव्यवहार्याणि ? आश्चर्यम्!

अद्य निर्मायं गुणग्रन्थिनः पादपांसुरसिर्घोषावितपतितरत्ननपरमपीवरपापिनः सारस्वतरसास्वादैकफला मुनीयमाना विद्वांसो धनवृद्धेभिवत् नहुङ्कारकातरधियो रौरवायितेषु स्थानेषु निवसन्ति वार्त्तावृत्तिमाश्रिता दरिद्राः। एता राष्ट्रस्य विभूतयो वार्द्धके विविधवातिकश्लेष्मिकव्याधिविपन्ना औषधोपयोगायाप्यपारयन्तः श्लेष्मकिट्टघाणपूर्णितमस्तिष्का वयः क्षपयन्ति, परं न कञ्चन याचन्ते—

विषमगता अपि बुधाः परिभवमिश्रां श्रियं न वाञ्छन्ति।
न पिबन्ति भौममम्भः सरजस्कं चातका ह्येते ॥

यत्र तपस्विनो विद्वांस एव सीदन्ति, तद् राष्ट्रमुन्नेष्यतीत्याशैव खपुष्पायिता शशशृङ्गायिता सैकततैलायिता च। इतश्च चलचित्तनदुपाऽप्रयाचितागमना अपि महोविदितागमा यथा सन्तिष्यन्ते यजनसेवाविभागः प्रबन्धव्यासकोऽशको नर्त्तते। तदनाचारविहाने कश्चन धानिकोऽस्थास्यत्तदा किमेतादृशी स्थितिरभविष्यत् ?

धिगस्त्वेषा विद्या, धिगपि कविता धिक् सुजनतां
वयो रूपं धिग् धिग् धिगपि च कुलं दुर्गतिमताम्।
असौ जीयादेकः सकलगुणहीनोऽपि धनवान्
बहिर्यस्य द्वारि तृणलवसमाः सन्ति गुणिनः ॥

एकस्मिन् भवगहने तृणपल्लवलयजालसंछन्नः।
कूपः पतन्ति यस्मिन् मुग्धकुरङ्गा निरालम्बे॥ क्षेमेन्द्रः।

एव दीनश्रमिकस्त्रोदुरवस्थां विज्ञाय स्वल्पेन मूल्याभेन क्रीत्वा तेभ्य एव महार्घं विक्रीणीते। एष एव मृत्स्नास्थाने सिकता नवनवलभीस्थाने क्षीर्णां लौहवलभी-मुपयुज्य, जीवनरक्षकेष्वौषधेषु यत्किञ्चित् सम्मिश्र्य, शर्करायां विचूर्णितं काचम्, गोधूम-चूर्णे तिन्तिडीकबीजचूर्णम्, पयसि पानीयमनेकविधं चूर्णान्तरञ्च, मरिचेष्विष्टकाचूर्णम्, हरिद्रायां पीतां मृदम्, घृते वसां तैलान्तराणि च सम्मिश्र्य राष्ट्रस्य जनान् कोटिशो वधव विनाशयितुं कृतापबुद्धिः। एवमनन्त स्निग्धः सिक्तश्च तरुणकच इव नीचो न कौटिल्यं विजहाति। सत्यम्, तस्करस्य कुतो धर्मः।

मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम्।
लोभाविष्टो नरो हन्ति स्वामिनञ्च सहोदरम्॥

परम्, किमनेन राष्ट्रमुन्नेतुं शक्यते? गृह दग्ध्वा इङ्गालकानां मूल्य सलयितुं शक्यते किम्? परिवार परिसमाप्यान्नं सुलभ विधातुमभिलष्यते किम्? यथार्थतम्, सुनीतेरेव ध्रुवोत्पत्तिर्भवति। सम्पत्तेः परलोपयोगो यथासम्भवमधिकाधिक स्वल्पानां स्वप्रमाणां प्रसन्नचेतसां चिरस्थिरतरायुषां विदुषां संख्या भवति। परमद्य—

उष्णं निःश्वसिति क्षितिं विलिखति प्रस्तौति न प्रेयसः
प्रीतिं सूक्तिभिरीरितुः करतले धत्ते कपोलस्थलीम्।
वाग्देवी हृदयज्वरेण गुरुणाऽऽक्रान्ता इवाशैर्वृथा
नीताऽऽविष्कृतकोपनिष्कृपनृपस्तोत्रत्रपापात्रताम्॥

परिश्राम्यते पूर्णे पारिश्रमिके दत्ते सतोषं तस्मिन् पूर्णोदरे च दानाभ्यर्थस्य सदुपयोगं वीक्ष्य हर्षितव्यम्। द्रव्यस्यानावश्यकः सङ्ग्रहश्च न भवति, भवति चासुलभायाः समाजेऽस्वस्ता। परमद्य हन्त। अनुना सर्वमासिनार्थविकारेण जीवन्मृताः सनेत्रान्धाः सवाङ्मूका असनस्विनो मानवाः, कृशकाया गर्तगतलोचनाः स्वातकपोल विशिथिल-भुजस्कन्धा विशतवयसः कुब्जाः समाजस्य चलाः कलङ्का युवानश्च निर्मिताः। हन्त। कीदृशी विडम्बना। शास्त्रैः प्रतिबोध्यमानैरप्यस्माभिरशर्मनिरतेन गृहीतः।

निद्राति स्नाति भुङ्क्ते भ्रमति कचभरं शोषयत्यन्तरास्ते
दीव्यत्यक्षैर्न चायं गदितुमवसरो भूय आयाहि याहि।
इत्युद्दण्डै प्रभूणामसकृदधिगतान् वारितान् द्वारि पालैः
पश्यास्मानब्धिकन्ये। सरसिरुहरुचामन्तरङ्गैरपाङ्गैः ॥

परमद्य धूर्त्ता धर्मस्य ढक्कां केवलं नादयन्ति बकभक्ता न च धर्मं चरन्ति। समाज समत्वाय गुणकर्मविभागशश्चातुर्वर्ण्यं चतुरेण सृष्टम्। परम् शिरो बदरीफलायते, भुजाविपीकायेते, पादौ शलाकायेते, केवलमुदरं दानप्रापणकर्म रिक्ततार्धमं सुरसारोरमिव भूगोलार्द्धभागमिव वैधते।

विवेकहीना समभावोत्पादकं सर्वाभ्युदयमहितकरं मन्यन्ते। नैतत्साम्यम्, यत्सर्वे परिमार्जनं गृहनिर्माणं वा कुर्युः प्रस्थ वा भक्षयेयुरिति। किन्तु सर्वे स्वस्वयोग्यतानुसारि कर्म कुर्वाणा राष्ट्रतो जीवनोपयोगि योग्यतावर्द्धकञ्च साधनं समानं लभेरन्।

धनबलेन स्थापिता सत्ताऽपूर्णा सन्दिग्धा च, पारस्परिकनिष्ठया समत्वे स्थापिता च स्थायिनी प्रभावोत्पादिका च। सा यदि प्रतितिष्ठेत्तदा प्रतिदिनं प्रेक्ष्यमाणो घोरः पारस्परिक सङ्घर्षो विनश्येत्। अयायमर्थविकारः शारीरिको रक्तविकार इव समस्तं राष्ट्रं देहमिव दूषयति। अनेनार्थविकारेण प्रवृद्धेन रक्तस्य चापेनेव समाजस्य पक्षाघातः समजनि, हसितेन च रक्ताल्पता। एष समये समये श्रमिकान् प्रलोभ्य वञ्चयति कल्पवृक्षोद्यानानि प्रदर्श्य तान् विनाशयति वशीं नादयित्वा कस्तूरीमृगमिव मोहयित्वा हन्ति। परमिदं ध्येयं यद् यो दरिद्रान् दुर्गमयति तस्य दुर्गतिर्ध्रुवा।

विश्वास्य मधुरवचनैः साधून् ये वञ्चयन्ति नम्रतमाः।
तानपि दधासि मातः काश्यपि। यातस्तवापि हि विवेकः ॥ जगन्नाथः।

स्वकार्ये सिषाधयिषु पुच्छवादी नम्रः, सिद्धौ च राक्षसः। दम्भोऽभिमानश्च पुच्छवादस्वभावः।

मत्स्यस्येवाप्सु सदा दम्भस्य ज्ञायते गतिः केन।
नास्य करौ न च पादौ न शिरो दुर्लक्ष्य एवासौ ॥ क्षेमेन्द्रः।

शरणे सभुजङ्गमे स्वपन् प्रतिबुद्धेन परेण बोधितः ।
तरुणः खलु जातविभ्रमः स्वयमुमं भुजगं जिघृक्षति ॥ अश्वघोष ।

विशालस्याकाशस्याधो द्योतमानाना चन्द्रतारकाणां प्रकाशम्, शीत मन्दं प्रवहतो वायो शान्तसृष्टेश्चानन्द विमुच्य क कारायिते गृहकोणे विद्युद्व्यजनवाते वासोऽस्माभिरङ्गीकृत । हन्त ! सत्य आनन्द एवाद्य पुञ्जवादपूरे प्रौढ । मञ्चनटीषु वेश्यासु वानरभल्लूकप्रदर्शनेषु निपतन्ति मानवा आनन्द लिप्सवो दुष्काले बुभुक्षिता अन्नकणेष्विव । अहो ! आनन्दाभावे प्रतिच्छायायामेवानन्दमनुबुभूषति मुग्ध । अस्माक जीवने क्वाद्योत्साह ? वय श्वसिमो यतो हि प्राणा न निर्यान्ति । पर जीवने जीवन नास्ति, उत्साहस्य मानसशक्तेश्चाभाव । कलाहीन नवीनताविहीन भावनारहित रोरुद्यमान जीवनम् । किमेतदपि जीवनम् ?

वयमार्या । आर्यसंस्कृतेः प्रसाराय वयमेवाधिकृता । अस्माभिर्बहवो भोगा भुक्ता पर तृष्णाद्युनापि युवतिरेव ।

या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यति ।
ता तृष्णा दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ भागवते ९।१९।१६

अवधार्यताम्, अस्माक माहात्म्य त्यागेनैव ननु भोगेन । जठरं को न बिभर्ति केवलम् । भोगैर्विषया न शमितु पार्य्यन्ते । अथ च यदि वयं भोगान्न त्यक्ष्यामस्तदा भोगा अस्मान् विहाय व्रजिष्यन्ति । यदि वय प्रजानां क्षेमं न साधयिष्यामस्तदा प्रजा स्वतस्तत् साधयिष्यन्ति । तदा क्वास्माक वैशिष्ट्यम्, क च सम्मान, किञ्च गरीयसोऽध्ययनस्य फलम् ?

यातो मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां
गन्ता कं प्रति पान्थसन्ततिरियं सन्तापमालाकुला ।
एवं यस्य निरन्तराधिपटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो धिग् वारिधीनां जनु ॥

एष धनप्रयासदपक्लता । भूमण्डले बहूनि राष्ट्राणि जागरितानि । दरीचर्यौ जातयोऽ-

प्युक्तज्ञाना जाताः। अस्माभिरपि जागरितव्यम्, योऽकव्यव विश्वस्य भूत्यै। सततो-पकारनिरतमनसो भवादृशा एवादो महत् कर्म कर्त्तुं क्षमाः।

उद्धृतौ भवति कस्य वा भुवः श्रीवराहमपहाय योग्यता। माघः।

एषा च सत्संस्कारस्य दिव्यधारा समस्तजीवने सततं प्रवहेत्। प्रवहणञ्चैकस्यां दिशि। पर्वते पतितं पानीयं शतमार्गेभ्यः प्रवहन्न सरितं निर्मातुं प्रभवेत्। तदेव चैकस्यां दिशि प्रवहत् स्रोतो भूत्वा धारारूपेण नदीरूपेण परिणम्य समुद्रमिव स्वोद्देश्यं प्राप्तुं समर्थम्। एषैव स्थितिः सत्काराणाम्। जलं हि निम्ने सर्वतः धृत्वा छिद्रं रचयति। प्रथमतो भूमेः पोषण निरुन्धदुर्वराशक्तिं ह्रासयति, द्वितीयतश्चैकत्रीभूत विषाक्तवायुं प्रसारयन् मशकान् प्रकाममुत्पाद्य विषमज्वरमापादयति। अतो लोकहिताय जलहिताय च तस्य सर्वस्मिन् भूभागे विभाजनमेव वरम्। एवमेव द्रव्यस्य। द्रव्यं हि 'द्रु गतौ' धातोर्व्युत्पन्नम्, गतिशीलता तस्य प्रधानं धर्मः। निरोधे व्यापत्।

विविधव्याजहृतलोकधनोऽनुत्पादकः स्वतो ह्रियमनुभूय, चोरयमाणः परैर्दृष्टो दानमिषेण ह्रिय दोषं परिहरन्निव स्वामित्वं निराकुर्वन् स्वत्वं त्यजेत्। वस्तुतोऽ-परिश्राम्यत उपभोगेऽधिकार एव कथम्? बुभुक्षिताः पक्षिणः स्वयमाहाराय यतन्ते। क्षुधार्त्तस्य क्षुच्छान्तिः स्वयं भोजनेनैव। कर्त्तैव सर्वत्र फलभाक्।

समाजो हि सहयोगिनां सहकर्मिणां पारस्परिकभावपूर्णः सामञ्जस्ये सामरस्ये च समाश्रितः समुदायः। परमद्य तस्मिन् केचनासहकर्माणोऽनुत्पाद्यापि सर्वाधिकं विघ्न-जीविनश्च भूता व्यपेतलज्जाः। एतानन्तरेण न कापि समाजे क्षतिः। यथा च—

( १ ) न्यासोपजीवी—कस्यापि शतमुद्रं भूषणं क्षेत्रं गृहं पत्रादि वा न्यस्य आवश्यकतापीडिताय पञ्चाशन्मुद्रा ददाति न्यासधरः। एतस्य कुसीदं दश मुद्राः प्रतिमासम्। न्यासावर्त्तनावधिमासत्रयम्। परिस्थितिपीडितो न्यासकरोऽवधिमध्ये कथमपि न्यासं प्रत्यावर्त्तयितुं न समर्थः। न्यासधरस्य कुसीदचक्रादृपा यथा प्रतिक्षणमेधते, स्वत्वस्य तथैव ह्रासः। अत एव स महाजनः। जनो दृश्यमानोऽप्यजनः[1]—जनेतरः—मानवोचितगुणरहितः, सोऽपि न सामान्योऽपि तु महान्। अथवा 'अज गतिक्षेपणयोः'—अजनः। न्यासेन सह न्यासधरस्यात्मसात्करणे सस्पृहः सफलश्च, सोऽपि महान्।

---

१ पर्युदासो नञ्।

दस्युराजस्तु सम्पन्नेभ्योऽपहरति, पामय तु वराकानकिञ्चनान्,अभद्रभागान्, भग्नमनसो विषण्णान्, खिन्नान् सन्तानवसादयति। अत एव प्राकृतै. स 'बाबू'[1], 'लाला'[2] आदिपदैः सम्बोध्यते।

( २ ) व्यसनोपजीवी—परेषां व्यसनेन कष्टेन विपत्त्या यो लाभान्वितो भवति स। यथा वाक्लो वैद्यश्च। ज्ञान हि परेषां शर्मणे। यो ज्ञान विक्रीणानो लोकस्य विपत्त्या लाभान्वितो बुभूषति स किं ज्ञानोपासक ? "ते हित्वा काञ्चन राशिं पांशुराशिमुपासते"। स तु व्यापारी भगवत आशिष आशासानो भक्त इव "न स भक्त स वै वणिक्"। य. शूल-मारोप्यमाणात् पञ्चसहस्र मुमूर्षोश्च शत जिघृक्षति विचार्यतां स कीदृश ? 'यो मर्त्तु-कामादपि हर्त्तुं काम'।

नार्थार्थं नापि कामार्थमथ भूतदया प्रति।
वर्त्तते यश्चिकित्सायां स सर्वमतिवर्त्तते॥ चरक।

एतादृशास्तु राष्ट्रस्य गौरवम्। परमद्य कियन्तस्तादृशा। अद्यत्वे चिकित्सका प्रथम द्रव्यं न हि, तस्य धन दिह अन्ते, स जीवतु म्रियतां वा।

( ३ ) शुल्कोपजीवी—गृहशुल्केन शकटशुल्केन जनवाहनशुल्केन जीवति, शत सहस्र वा मानवाना नियतवेतनेन नियोज्य यन्त्रादीना परिचालनेन वार्थमुपार्जयति स।

( ४ ) घटक—केवल वार्तावित्त उभयोपभोक्ता उभयार्थहरश्च।

( ५ ) समानशीलस्य धनिन पोष्यपुत्रोऽपहृतहिरण्यस्य परिरक्षको लगुडी च।

अद्य वय सर्वाभ्युदयाय कृतसङ्कल्पा समवेता। सर्वेण[3] सर्वस्मै[4] सर्वस्मात्[5] सर्वस्य[6] सर्वस्मि[7]न्नभि उदय =सर्वाभ्युदय। सर्वेषामेकाङ्गिन्युदये न सन्तुलन सम्भाव्यते, अत समन्तादुदयोऽस्माकमभीष्ट। स चाधिदैविकीनामाधिभौतिकीनामाध्यात्मिकीनाञ्च शक्तीना-मभितो दिशमुत्कर्षं स्वभावबाधिकाया बाधाया अपनयनश्च। सोऽयं दरिद्राङ्गभञ्जिदोषानु-

---

१ बा=सहित, उर्दू का उपसर्ग। यथा बा कायदा बा इज्जत। बू=गन्ध। बदबू खुशबू यथा। दुर्गन्धार्थ सभ्यव्यवहारमे केवल बू कहनेकी प्रणाली है। २ ला—ला इत्यनुकरणम् सर्वदा 'ला' 'ला' इति करोति स। ला आदाने। अथवा परेषां धन दृष्ट्वा यस्य मुखाल्लालाश्च्योतन्ति स। ३ जनेन। ४ प्राणिने। ५ उपायात्। ६ विश्वस्य। ७ काले परिस्थाने च।

